श्रीहयग्रीवाय नमः ॥ अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां नमामः । अजा ये तां जुषमाणां भजन्ते जह
त्येनां भुक्तभोगां नुमस्तान् ॥१॥ कपिलाय महामुनये शिष्याय तस्य चासुरये पञ्चशिखाय तथेश्वरकृष्णाय ते नमस्यामः ॥
इह खलु प्रतिपित्सितमर्थं प्रतिपादयन्प्रतिपादयितावधेयवचनो भवति प्रेक्षावताम् । अप्रतिपित्सितं तु प्रतिपादयन्नायं लौकिको
न परीक्षक इति प्रेक्षावद्भिरुन्मत्तवदुपेक्षणीयः स चैषां प्रतिपित्सितोर्थो यो ज्ञातः सन् परमपुरुषार्थाय कल्पते इति प्रेक्षि ग२
तशास्त्रविषयज्ञानस्य परमपुरुषार्थसाधनहेतुत्वात्तद्विषयजिज्ञासां समवतारयति ॥ दुःखत्रयाभिघाताज्जिज्ञासा तदप
घातके हेतौ । दृष्टे सापार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥१॥ एवं हि शास्त्रविषयो न जिज्ञास्येत यदि दुःखं नाम जगति न स्या
त् ॥ सद्वा न जिहासितं वाऽशक्यसमुच्छेदम् । अशक्यसमुच्छेदता च द्वेधा ॥ दुःखस्य नित्यत्वाद्वा तदुच्छेदोपायापरिज्ञा
नाद्वा । शक्यसमुच्छेदत्वेऽपि च शास्त्रविषयज्ञानस्याऽतदुपायत्वाद्वा सुकरस्योपायान्तरस्य सद्भावाद्वा । तत्र न तावद्दुःखं न
स्ति नाप्यजिहासितमित्युक्तं दुःखत्रयाभिघातादिति दुःखानां त्रयं दुःखत्रयं तत्खल्वाध्यात्मिकं चाधिभौतिकं चाधिदैविकं
च ॥ तत्राध्यात्मिकं द्विविधं शारीरं मानसं च शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तम् । मानसं कामक्रोधलोभमोहभयेर्ष्यावि
षादविषयविशेषादर्शननिबंधनं सर्वं चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं । बाह्योपायसाध्यं च दुःखं द्वेधा । आधिभौतिकमाधि
दैविकं च ॥ तत्राधिभौतिकं मानुषपशुमृगपक्षिसरीसृपस्थावरनिमित्तम् ॥ आधिदैविकं यक्षराक्षसविनायकग्रहाद्यावेश
निबन्धनम् ॥ तदेतत्प्रत्यात्मवेदनीयं दुःखं रजःपरिणामभेदो न शक्यते प्रत्याख्यातुम् ॥ तदनेन तापत्रयेणान्तःकरणवर्
तिना प्रतिकूलतया चेतनशक्तेरभिसंबन्धोभिघातः एतावता प्रतिकूलवेदनीयत्वं जिहासाहेतुरुक्तः यद्यपि न सन्निरुध्य
ते दुःखं तथापि तदभिभवः शक्यः [illegible] के हेताविति तस्य दुःखत्रयस्या

सां॰ कौ॰

२

कुतोऽत्यन्तत्वसंभवः तस्माद्वैदिकस्य तापत्रयप्रतीकारहेतोर्मुहूर्त्तयामाहोरात्रमाससंवत्सरादिनिर्वर्त्तनीयस्यानेकजन्मपरंपरायासससंपादनीयाद्विवेकज्ञानादीषत्करत्वात्पुनरपि जिज्ञासा व्यर्थे स्यादाशंक्याह ॥ दृष्टवदानुश्रविकः सह्यविशुद्धिक्षयातिशययुक्तः ॥ तद्विपरीतः श्रेयान्व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥ दृष्टवदानुश्रविक इति ॥ गुरुपाठादनुश्रूयत इत्यनुश्रवो वेदः एतदुक्तं भवति ॥ श्रूयते न तु केनचित्क्रियत इत्यनुश्रवो वेदः तत्र भव आनुश्रविकस्तत्र प्राप्तो ज्ञात इति यावत् ॥ आनुश्रविकोऽपि कर्मकलापो दृष्टेन तुल्यो वर्त्तते ऐकान्तिकात्यंतिकदुःखप्रतीकारानुपायत्वस्योभयत्रापि तुल्यत्वात् यद्यपि चानुश्रविक इति सामान्याभिधाने तथापि कर्मकलापाभिप्रायं द्रष्टव्यम् विवेकज्ञानस्याप्यानुश्रविकत्वात् तथा च श्रूयते ॥ आत्मा वा रे ज्ञातव्यः प्रकृतितो विवेक्तव्यो न स पुनरावर्त्तते न स पुनरावर्त्तते इति प्रसंगप्रतिज्ञायां हेतुमाह ॥ सह्यविशुद्धिक्षयातिशययुक्तः अविशुद्धिः सोमादियागस्य पशुबीजादिवधसाधनता यथाह स्मात्र भगवान्पञ्चशिखाचार्य्यः ॥ स्वल्पः संकरः सपरिहारः सप्रत्यवमर्षः इति स्वल्पः संकरो ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य पशुहिंसादिजन्मनानर्थहेतुनाऽपूर्वेण सपरिहारः शक्यो हि कियता प्रायश्चित्तेन परिहर्त्तुम् ॥ अथ च प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्मविपाकसमये च पच्यते तथापि यावदसावनर्थं प्रसूते तावत्सप्रत्यवमर्षः प्रत्यवमर्षः सहिष्णुतया सहवर्त्तते प्रत्यवमर्षः मृष्यंते हि पुण्यसंभारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः स्वपापमात्रोपपादितां दुःखवह्निकणिकाम् ॥ न च न हिंस्यात्सर्वभूतानीति सामान्यशास्त्रं विशेषशास्त्रेण अग्नीषोमीयं पशुमालभेते [illegible] इति [illegible] यत्तादुर्बलं बाध्यत इति तत्र न कश्चि

पघातकस्तदपघातकः उपसर्ज्जनस्यापि दुःखस्य निष्कृष्टस्य तदा परामर्शः अपघातके अहेतुः शास्त्रप्रतिपाद्यो नान्यप्रतिपाद्य इत्यस
र्थः अत्र शङ्कते दृष्टे सापार्था चेदिति अयमर्थः अस्तु दुःखत्रयं जिहासितं चास्तु जिहासनु चेतनः भवतु च तच्छक्यह
नं शक्यता च शास्त्रगम्य उपायस्तदुच्छेदे तु तथाप्यत्र प्रेक्षावतो जिज्ञासानयुक्ता दृष्टस्यैवोपायस्य तदुच्छेदकस्य सुकरस्य विद्यमानत्वा
त् तत्त्वज्ञानस्य त्वनेकजन्माभ्यासपरम्परायाससाध्यतया तिदुष्करत्वात्। तथा च लौकिकानामाभाणकः। अर्के चेन्मधु वि
न्देत किमर्थं पर्वतं व्रजेत्। इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्॥ सन्ति चोपायाः शतशः शारीरदुःखप्रतीकाराय ईष
त्करा भिषजां वरैरुपदिष्टाः मानसस्यापि तापस्य प्रतीकाराय मनोज्ञस्त्रीपानभोजनविलेपनवस्त्रालंकारादिविषयप्राप्तिरुपायः सुकरः
एवमाधिभौतिकस्यापि दुःखस्य नीतिशास्त्राभ्यासकुशलतानिरत्ययस्थानाध्यासनादिः प्रतीकारहेतुरीषत्करः तथाधिदैवि
कस्यापि दुःखस्य मणिमन्त्रौषधाद्युपयोगः सुकरः प्रतीकारोपाय इति तन्निराकरोति नैतिकुतः एकान्तात्यन्ततोऽभावात्। एकान्तो
दुःखनिवृत्तेरवश्यंभावः अत्यन्तो दुःखस्य निवृत्तस्य पुनरनुत्पादः तयोरेकान्तात्यन्तयोरभावः एकान्तात्यन्तत इति षष्ठी द्विव
चनस्थाने सार्वविभक्तिकस्तसिः। एतदुक्तं भवति यथाविधि रसायनकामिनीनीतिशास्त्राभ्यासमन्त्राद्युपाययोगेपि तस्याध्यात्मि
कादेर्दुःखस्य निवृत्तेरदर्शनादनैकान्तिकत्वम्। निवृत्तस्य पुनरुत्पत्तिदर्शनादनात्यन्तिकत्वमिति अतः सुकरोप्यैकान्तिकात्यन्तिक
दुःखनिवृत्तेर्न दृष्ट उपाय इति नापार्था जिज्ञासेत्यर्थः। यद्यपि दुःखममंगलं तथापि तदपघातो मंगलमेवेति युक्तं शास्त्रस्यादौ तत्संकी
र्तनम्। स्यादेतत् मा भूत् दृष्ट उपायो वैदिकस्तु ज्योतिष्टोमादिः संवत्सरपर्यन्तः कर्मकलापस्तापत्रयमेकान्तमत्यन्तं चापनेष्यति
श्रूयते हि स्वर्गकामो यजेतेति स्वर्गस्तु यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमिति दुःखवि
रोधी सुखविशेषः स्वर्गः स च स्व[illegible] ऽपाम सोमममृता अभूमेति तत्क्षये

दृष्टानुश्रविकयोरपि प्राशस्त्यात् तयोः प्राशस्त्ययोर्मध्ये प्रशस्तः पुरुषार्थानां स्वरूपाय श्रेयानुक्तः पुनरत्योऽसमाप्तिरित्यत उक्तं
व्यक्ताव्यक्तज्ञविज्ञानादिति ॥ व्यक्तं चाव्यक्तं च ज्ञश्च ते व्यक्ताव्यक्तज्ञाः तेषां विज्ञानं विवेकेन ज्ञानम् । व्यक्तज्ञानपूर्वकम
व्यक्तस्य तत्कारणस्य ज्ञानं तयोः पारार्थ्येनात्मा परो ज्ञायते इति ज्ञानक्रमेणाभिधानम् ॥ एतदुक्तं भवति ॥ श्रुतिस्मृतीति
हासपुराणेभ्यो व्यक्तादीन्विवेकेन श्रुत्वा शास्त्रयुक्त्या व्यवस्थाप्य दीर्घकालादरनैरंतर्यसत्कारसेविताद्भावनाम
याद्विज्ञानादिति तथा च वक्ष्यति एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ॥ अविपर्ययाद्विशुद्धं केवलमुत्पद्य
ते ज्ञानमिति ॥२॥ तदेवं प्रेक्षावदपेक्षितार्थत्वेन शास्त्रारंभं समाधाय शास्त्रमारभमाणः श्रोतृबुद्धिसमवधानाय त
दर्थं संक्षेपतः प्रतिजानीते ॥ मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतयः सप्त षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पु
रुषः ॥३॥ संक्षेपतो हि शास्त्रार्थस्य चतस्रो विधाः कश्चिदर्थः प्रकृतिरेव ॥ कश्चिद्विकृतिरेव ॥ कश्चित्प्रकृतिविकृतिरेव कश्चि
दनुभयरूपः तत्र का प्रकृतिरेवेत्यत उक्तम् ॥ मूलप्रकृतिरविकृतिः प्रकरोतीति प्रकृतिः प्रधानं सत्त्वरजस्तमसां साम्या
वस्था सा विकृतिः प्रकृतिरेवेत्यर्थः कस्मादित्यत उक्तं मूले [illegible] ति मूलं चासौ प्रकृतिश्चेति मूलप्रकृतिर्विश्वस्य कार्यसं
घातस्य मूलम् ॥ न त्वस्या मूलान्तरमस्ति अनवस्थाप्रसंगात् न चानवस्थायां प्रमाणमस्तीति भावः ॥ कतमाः पुनः प्रकृति
विकृतयः कियत्यश्चेत्यत उक्तं महदाद्याः प्रकृतिविकृतयः सप्त प्रकृतयश्च ता विकृतयश्चेति विकृतयः सप्त ॥ तथा हि महत्तत्त्वमहंकारस्य
प्रकृतिर्विकृतिश्च मूलप्रकृतेः एवमहंकारतत्त्वं तन्मात्राणामिंद्रियाणां च प्रकृतिर्विकृतिश्च महतः एवं पंच तन्मात्राणि भूताना
माकाशादीनां प्रकृतयो विकृतयश्चाहंकारस्य ॥ अथ का विकृतिरेव कियती चेत्यत उक्तं षोडशकस्तु विकार इति षोडशसंख्यापर
मितो गणः षोडशकः तुशब्दोऽवधारणे भिन्नक्रमः ॥ पञ्च भूतानि एकादशेन्द्रियाणीति षोडशको गणो विकार एव न प्रकृतिः ॥ यद्य
पि विकारादीनामपि [illegible] तथापि गवादयो बीजादयो वा न

स्ति विरोधो भिन्नविषयत्वात्॥ तथाच न हिंस्यादिति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न त्व क्रत्वर्थत्वमपि अग्नीषो
मीयं पशुमालभेतेत्यनेन तु पशुहिंसायाः क्रत्वर्थत्वमुच्यते नानर्थहेतुत्वाभावस्तथा सति वाक्यभेदप्रसंगात् न चानर्थ
हेतुत्वक्रतूपकारकत्वयोः कश्चिदस्ति विरोधः सा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपकरिष्यतीति क्षयातिशयौ च फलगता
वप्युपायेऽपचरितौ क्षयित्वं च स्वर्गादेः भावत्वे सति कार्यत्वादनुमितम्॥ ज्योतिष्टोमादयः स्वर्गमात्रस्य साधनं वाजपे
याद्यस्तु स्वाराज्यस्येति सातिशयत्वम्॥ परसंपदुत्कर्षो हि हीनसंपदं पुरुषं दुःखाकरोति अपाम सोमममृता अभूमे
ति चामृतत्वाभिधानं चिरस्थेमानमुपलक्षयति॥ यदाहुराभूतसंप्लवं स्थानममृतत्वं हि भाष्यते इति अत एव च श्रुतिः
न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः परेण नाकं निहितं गुहायां विभ्राजते यत् यतयो विशंति त
था कर्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः तथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशु
रिति तदेतत्सर्वमभिसंध्याह॥ तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्॥ तस्मादानुश्रविकाद्दुःखापघातकोपाया
त्सोमपानादेरविशुद्धादनित्यसातिशयफलाद्विपरीतो विशुद्धो हिंसादिसंकराभावात् नित्यनिरतिशयफलोऽसकृदपुनरावृत्ति
श्रुतेः न च कार्यत्वेनानित्यता फलस्य युक्ता भावकार्यस्य तथात्वात् दुःखप्रध्वंसस्य तु कार्यस्यापि तद्विपरीतत्वात्॥ न च दु
खान्तरोत्पादः कारणप्रवृत्तौ कार्योत्पादात् विवेकज्ञानोपजननपर्यन्तत्वाच्च कारणप्रवृत्तेः॥ एतच्चोपरिष्टादुपपा
दयिष्यते॥ प्रक्षरार्थस्तु तस्मादानुश्रविकाद्दुःखापघातकाद्धेतोर्विपरीतः सत्त्वपुरुषान्यताप्रत्ययसाक्षात्कारो दुःखा
पघातको हेतुः अत एव श्रेयान् [illegible] आनुश्रविको हि [illegible] मात्रया दुःखापघातकत्वाच्च प्रशस्यः सत्त्वपु

लेशमात्रेण

माप्तश्रुतिराप्तवचनन्तु ॥ ५ ॥ अत्र दृष्टमिति लक्ष्यनिर्देशः परिशिष्टं तु लक्षणम् समानासमानजातीयव्यवच्छेदो लक्षणा
र्थः अवयवार्थस्तु विषिण्वन्ति विषयिणमनुबध्नन्ति स्वेन रूपेण निरूपणीयं कुर्वन्तीति विषयाः पृथिव्यादयः
सुखादयश्चास्मदादीनामविषयाश्च तन्मात्रलक्षणा योगिनामूर्ध्वस्रोतसां च विषयाः विषयं विषयं प्रतिवर्त्तत इति
प्रतिविषयमिन्द्रियम् वृत्तिश्च सन्निकर्षः अर्थसन्निकृष्टमित्यर्थः तस्मिन्नध्यवसायस्तदाश्रित इत्यर्थः अध्यवसाय



श्च बुद्धिव्यापारो ज्ञानम् उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोभिभवे सति यः सत्वसमुद्रेकः सोध्यवसाय इति
च वृत्तिरिति च ज्ञानमिति चाख्यायते इदं तत्प्रमाणम् अनेन यश्चेतनाशक्तेरनुग्रहस्तत्फलं प्रमाबोधः बुद्धितत्वं हि प्रा
कृतत्वादचेतनमिति तदीयोध्यवसायोप्यचेतनो घटादिवत् एवं हि बुद्धितत्वस्य सुखादयोपि परिणामभेदा अचे
तनाः पुरुषस्तु सुखाद्यननुषङ्गी चेतनः सोयं बुद्धितत्ववर्त्तिना ज्ञानसुखादिना तत्प्रतिबिंबितस्तच्छायापत्या ज्ञानसुखादिमा
निव भवतीति चेतनोनुगृह्यते चितिच्छायापत्या चाचेतनापि बुद्धिस्तदध्यवसायश्चेतन इव भवतीति ॥ तथा च वक्ष्यति तस्मात्त
त्संयोगादचेतनं चेतनवदिव लिंगम् ॥ गुणकर्त्तृत्वे च तथा कर्त्तेव भवत्युदासीन इति अत्राध्यवसायग्रहणेन संशयं व्यवच्छि
नत्ति संशयस्यानवस्थितग्रहणेनानिश्चितरूपत्वात् निश्चयोध्यवसाय इति चनार्थान्तरम् ॥ विषयग्रहणेनासद्विषयं
विपर्ययमपाकरोति प्रतिग्रहणेन चेन्द्रियार्थसन्निकर्षसूचनादनुमानस्मृत्यादयः पराकृता भवन्ति तदेवं समानासमान
जातीयव्यवच्छेदकं दृष्टं प्रतिविषयाध्यवसाय इति दृष्टस्य संपूर्णं लक्षणम् ॥ लक्षणान्तराणि च तैर्थिकानां न दूषितानि
च न दूषितानि विस्तरभयादिति ॥ अनुमानं प्रमाणमिति वदतां लोकायतिकेनाप्रतिपन्नसंदिग्धविपर्यस्ता वा पुरुषाः कथं

प्रादिभ्यस्तत्त्वान्तरम् ॥ तत्त्वान्तरोपादानत्वं च प्रकृतित्वमित्यभिप्रेतमिति न दोषः सर्वेषां गोघटादीनां स्थूलत्वेन्द्रियग्रा
ह्यतासमत्वमिति च न तत्त्वान्तरम् ॥ एवं नु भयरूपमाह ॥ न प्रकृतिर्न विकृतिः पुरुष इति एतत्सर्वमुपपादयिष्यते ॥ तेषामि
समर्थप्रमाणानि कर्तृभिरभिमताः प्रमाणभेदा लक्षणीयाः ॥ न च सामान्यलक्षणमन्तरेण विशेषलक्षणं कर्तुमिति
प्रमाणसामान्यं तावल्लक्षयति ॥ प्रमाणमिष्टमिति ॥ दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ॥ त्रिविधं प्रमाणमिष्टं
प्रमेयसिद्धिः प्रमाणाद्धि ॥४॥ अत्र च प्रमाणमिति समाख्यालक्ष्यपदं तन्निर्वचनं च लक्षणम् ॥ प्रमीयतेऽनेनेति प्रमाणमिति
वैचनात्प्रमां प्रति करणत्वं गम्यते ॥ असंदिग्धाविपरीतानधिगतविषया चित्तवृत्तिर्बोधश्च पौरुषेयः फलं प्रमा तत्सा
धनं प्रमाणमिति ॥ एतेन संशयविपर्ययस्मृतिसाधनेषु नातिप्रसङ्गः संख्याविप्रतिपत्तिनिराकरोतित्रिविधमिति तिस्रो विधाः
अस्य प्रमाणसामान्यस्येति त्रिविधम् ॥ न न्यूनं नाप्यधिकमित्यर्थः विशेषलक्षणानन्तरं चैतदुपपादयिष्यते कतमाः पुनस्ता
विधा इत्यत आह दृष्टमिति एतच्च लौकिकप्रमाणाभिप्रायमिति लौकिकव्युत्पादनार्थत्वाच्छास्त्रस्य तस्यैवात्राधिकारात्
आर्षं तु विज्ञानं योगिनां न लोकव्युत्पादनायालमिति तदपि नाभिहितमनधिकारात् ॥ स्यादेतन्माभून्न्यूनमधिकं तु कस्मा
न्न भवति संगिरन्ते हि वादिन उपमानादीन्यपि प्रमाणानीत्यत आह सर्वप्रमाणसिद्धत्वात् एषु वृष्टानुमानाप्तवचनेषु
सर्वेषां प्रमाणानां सिद्धत्वादन्तर्भावादित्यर्थः ॥ एतच्चोपपादयिष्यत इत्युक्तम् ॥ अथ प्रमेयव्युत्पादनाय प्रवृत्तं शास्त्रं
कस्मात्सामान्यतो विशेषतश्च प्रमाणं लक्षयतीत्यत आह प्रमेयसिद्धिः प्रमाणाद्धीति सिद्धिः प्रतीतिरिति यथासंख्यं क्रमानुरोधेन
पाठक्रममनादृत्य व्याख्याता ॥ संप्रमाणविशेषलक्षणावसरे प्रत्यक्षस्य प्रमाणेषु ज्येष्ठत्वात्तदधीनत्वाच्चानुमानादीनां सर्ववा
दिनामविप्रतिपत्तेश्च तदेव तावल्लक्षयति ॥ प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ॥ तल्लिङ्गलिङ्गिपूर्वकं

सां०कौ०

५

अग्निहि रूपादिज्ञानानां क्रियात्वेन करणं समनुमीयते यद्यपि चक्षुरादेः सामान्यस्य छिदादौ वास्यादिः स्वलक्षणमुपलब्धम्।।
तथापि विजातीयं रूपादिज्ञाने करणमनुमीयते तज्जातीयस्य करणत्वस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण इन्द्रियत्वजातीयं हि तत्करणम्‌।
न चेन्द्रियत्वस्य सामान्यस्य स्वलक्षणं इन्द्रियं प्रत्यक्षगोचरोर्वाग्दृशाम्‌ यथा वह्नित्वसामान्यस्य स्वलक्षणं वह्निः सोयं पूर्ववतः।
सामान्यतो दृष्टात्‌ सत्यपि वीतत्वेन तुल्यत्वेपि विशेषः अत्र दृष्टं दर्शनं सामान्यत इति सामान्यस्य सार्व विभक्तिकस्तसिः अदृष्ट
स्वलक्षणस्य सामान्यस्य दर्शनमनुमानमित्यर्थः सर्वं चैतदस्माभिर्न्यायवार्त्तिकतात्पर्यटीकायां व्युत्पादितमिति नेहोक्तं विस्त
रभयादिति प्रयोजकवृद्धशब्दश्रवणसमनन्तरं प्रयोज्यवृद्धप्रवृत्तिहेतुकेनानानुमानपूर्वकं चामिसमनुमानान्तरं शब्दं लक्ष
यति।।आप्तश्रुतिराप्तवचनं त्विति आप्तवचनमितिलक्ष्यनिर्देशः परिशिष्टं तु लक्षणम्‌।।आप्ता प्राप्ता युक्तेति यावत्‌।।आप्ता चासौ श्रुतिश्चे
ति आप्तश्रुतिः श्रुतिर्वाक्यजनितं वाक्यार्थज्ञानम्‌ तच्च स्वतः प्रमाणम्‌ अपौरुषेयवेदवाक्यजनितत्वेन सकलदोषाशंकाविनिर्मुक्त
युक्तं भवति एवं च वेदमूलस्मृतीतिहासपुराणवाक्यजनितमपि ज्ञानं युक्तम्‌।।आदिविद्वश्च कल्यादौ कल्पान्तराधीतश्रुतिस्मरणसं
भवः सुप्तप्रबुद्धस्येव पूर्वेद्युरवगतानामर्थानामपरेद्युः तथा चावट्यजैगीषव्ययोः संवादे भगवान्‌ जैगीषव्यो दश महाकल्पवर्तिज
न्मस्मरणमात्मनः उवाच दशसु महाकल्पेषु विपरिवर्त्तमानेन मया इत्यादि संदर्भेण आप्तग्रहणेन चायुक्ताः शाक्यभिक्षुनिर्ग्रंथ
कसंसारमोचकादीनामागमाभासाः परिहृता भवंति अयुक्तत्वं चैतेषां विगानात्‌ विच्छिन्नमूलत्वात्‌ प्रमाणविरुद्धार्थाभिधा
नात्‌ केश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहाद्बोद्धव्यम्‌ तुशब्दोनानुमानात्‌ व्यवच्छिनत्ति वाक्यार्थो हि प्रमेयोन
तु तद्धर्मो वाक्यं येन तत्र लिंगं भवेत्‌ न च वाक्यं वाक्यार्थं बोधयत्संबंधग्रहणमपेक्षते अभिनवकविरचितस्य वाक्यस्यादृष्टपूर्व
स्याननुभूतचरवाक्यार्थबोधकत्वादिति।।एवं प्रमाणसामान्यलक्षणे कृते तद्विशेषलक्षणे कृते च सत्सु यानि प्रमाणान्तराणि उपमानादी



नि संबंधग्रहणस्य स्वार्थसंबंधज्ञानसह
कारिणाः शब्दस्यार्थप्रसायकत्वादनुमानपूर्वक

२०

प्रतिपादयितव्यं च पुरुषान्तरगता अज्ञानसंदेहविपर्ययाः शक्याः पूर्वोक्तदृष्टा प्रत्यक्षेण प्रतिपत्तुम्। नापि मानान्तरेणानभ्युपगमात्।।
अनवधृतार्थज्ञाने संशयविपर्ययस्तु यं कंचित्पुरुषं प्रति प्रवर्त्तमानोऽनवधेयवचनतया प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत। तदनेनाज्ञाना
दयः परपुरुषवर्त्तिनोऽभिप्रायभेदाश्च वचनभेदाल्लिङ्गादनुमातव्या इत्येकान्तेनाप्यनुमानं प्रमाणमभ्युपेयम्।। तत्र प्रसक्तकार्यत्वादनुमा
नं प्रत्यक्षानन्तरं लक्षणीयम्।। तत्रापि सामान्यलक्षणपूर्वकत्वाद्विशेषलक्षणस्यानुमानसामान्यं तावल्लक्षयति।। तल्लिङ्गलि
ङ्गिपूर्वकमिति लिङ्गं व्याप्यं लिङ्गि व्यापकम्। शंकितसमारोपितोपाधिनिराकरणेन च स्वभावप्रतिबद्धं व्याप्यं येन प्रतिबद्धं

लिंग ६

तद्व्यापकं लिङ्गिग्रहणेन विषयवाचिना विषयिणं प्रत्ययमुपलक्षयति धूमादिर्व्याप्यो वह्न्यादिर्व्यापक इति यः प्रत्ययस्तत्पूर्व
कम्।। लिङ्गिपदं चावर्त्तनीयम्।। तेन लिङ्गमस्यास्तीति पक्षधर्मताज्ञानमपि दर्शितं भवति तत् व्याप्यव्यापकपक्षधर्मताज्ञानपू
र्वमनुमानमित्यनुमानसामान्यं लक्षितम्।। अनुमानविशेषांस्तु त्रीनितरलक्षितानभिमतान्स्मारयति।। त्रिविधमनुमानमि
ति।। तदिति तत्सामान्यतो लक्षितं विशेषतस्त्रिविधम्।। पूर्ववच्छेषवत्सामान्यतोदृष्टं चेति तत्र प्रथमं तावद्द्विविधमनुमा
नं वीतमवीतं च अन्वयमुखेन प्रवर्त्तमानं विधायकं वीतम्। व्यतिरेकमुखेन प्रवर्त्तमानं निषेधकमवीतम्।। तत्रावीतं शेषवत्। शि
ष्यते परिशिष्यत इति शेषः स एव विषयतया यस्यास्त्यनुमानस्य तच्छेषवत्।। यदाहुः प्रसक्तप्रतिषेधेऽन्यत्राप्रसंगाच्छिष्यमाणे
संप्रत्ययः परिशेष इति अस्य चावीतस्य व्यतिरेकिणः उदाहरणमग्रेऽभिधास्यत इति वीतं द्वेधा पूर्ववत् सामान्यतोदृष्टं च तत्रैकं
दृष्टस्वलक्षणसामान्यविषयं यत्तत्पूर्ववत्। पूर्वं प्रसिद्धं दृष्टस्वलक्षणसामान्यमिति यावत्।। तदस्य विषयत्वेनास्त्यनुमा
नस्येति पूर्ववत्। यथा धूमाद्वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते इति तस्य वह्नित्वस्य सामान्यस्य स्वलक्षणं वह्निविशेषो द
ष्टो रसवत्याम्।। अपरं च वीतं सामान्यतोदृष्टम् अदृष्टस्वलक्षणसामान्यविषयं यत्तत्सामान्यतोदृष्टं यथेन्द्रियविषयमनुमानम्।।

यथा पृथिवी इतरेभ्यो भिद्यते गंधवत्त्वात् इतरभेदस्य जलादिषु प्रसक्तस्य तत्र प्रतिषेधे अन्यत्राप्रसंगात् तत्र परिशिष्यमाणे संप्रत्यय इति ४

स्यानुमानमेव यत्राशी लिङ्गेन लिङ्ग्याद्यविनाभूतं प्रतीतं स्यात् यो लिङ्गादिसत्वमवगमयतीति यत्रादृष्टवक्तृकं प्रवादमात्रमिति इह हि चतुर्वेदाः इत्येतिह्यम्
यक्षो वटे यक्षः प्रतिवसतीति न तत्प्रमाणं निर्दिष्टवक्तृकत्वेन सम्प्रतिपत्तिकत्वात् आप्तवक्तृकत्वे निश्चये आगमे अन्तर्भावः इत्येवं त्रिविधं प्रमा
णमिति ॥५॥ एवं तावदत्र प्रमाणलक्षणमुक्तम् प्रमेयसिद्ध्यर्थं प्रमाणानि लक्षितानि तत्र यत्र पृथिव्यादि स्वरूपतः पादयोपलम्भा
स्यात्मनापि स्थूलपादादेर्लिङ्गोऽपि प्रत्यक्षतः प्रतिपद्यते पूर्ववता चानुमानेन धूमादिदर्शनाद्वह्न्यादीनि तत्र प्रयोज
नेषाञ्च सिद्धिरधिगम्यमनेनानुमानेन ॥ तत्र यत्र प्रमाणं यत्र समर्थं तदुक्तं प्रमाणेभ्यो निष्कृष्य दर्शयति ॥ सामान्यतस्तु दृष्टादती
न्द्रियाणां प्रतीतिरनुमानात्। तस्मादपि चासिद्धं परोक्षमाप्तागमात्सिद्धम् ॥६॥ तुशब्दः प्रत्यक्षपूर्वकमनुमानं विशिनष्टि सामान्यतो दृष्टा
द्व्यवसायादतीन्द्रियाणां प्रधानपुरुषादीनां प्रतीतिर्निश्चितिर्जायते यदि हेतुः तेषु व्यवसायः सम्यक् ॥ उपलक्षणं चैतत् शेषवत् इत्य
पि द्रष्टव्यम्। नास्ति सर्वं अतीन्द्रियेषु सामान्यतोदृष्टमेव प्रवर्तते तथा च यत्र तन्नास्ति महदादेरहंकारमन्त्रमे स्वर्गापूर्वदेवतादौ च तत
प्राप्तागमः प्राप्त इत्यत आह तस्मादपि चासिद्धं परोक्षमाप्तागमात्सिद्धमिति तस्मादपीत्येतानुतैव सिद्धे चकारे शेषवत् इत्यपि
समुच्चितमिति ॥६॥ यदि तु गगनकुसुमकूर्मरोमनरविषाणादिषु प्रत्यक्षमप्रवर्तमानं तदभावमवगमयति एवं प्रधानादि
ष्वपि तत्कथं तेषां सामान्यतोदृष्टादिभ्यः सिद्धिरित्यत आह अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ॥ सौक्ष्म्याद्व्यवधा
नादभिभवात्समानाभिहाराच्च ॥७॥ अनुपलब्धिरिति वक्ष्यमाणेन सिंहावलोकितन्यायेनानुषञ्जनीयम्। यथा उत्पतन् वियति
पतत्री अतिदूरत्वात् सन्नपि सम्यक् नोपलभ्यते। सामीप्यादि सर्वत्राप्यतिरनुषञ्जनीयः यथा लोचनस्थमञ्जनमति सामीप्यान्न दृश्यते
इन्द्रियघाते अन्धबधिरत्वादि। मनोऽनवस्थानात् यथा कामाद्युपहतमनाः स्फीतालोकवर्त्तिनमिन्द्रियसन्निकृष्टमर्थं न पश्यति
सौक्ष्म्यात् यथा परमाण्वादि तमनाः अपि न पश्यति ॥ व्यवधानात् ॥ यथा कुड्यादिव्यवहितं राजदारादि न
पश्यतीति ॥ अभिभवात् ॥ यथाह्नि सौरीभिर्भाभिरभिभूतं ग्रहनक्षत्रमण्डलं न पश्यति समानाभिहारात् ॥ यथा तोयदविमुक्तोद
बिन्दून् जलाशये न पश्यति चकारोऽनुक्तसमुच्चयार्थः तेनानुद्भवोऽपि गृहीतः तद्यथा क्षीरादौ दध्याद्यवस्थायां दध्यादि अनुद्भवान्न दृश्यते ॥

ये प्रतिवादिभिरभ्युपेयंते तान्युक्तलक्षणेष्वेव प्रमाणेष्वंतर्भवंति। तथाहि उपमानं तावद्यथा गौस्तथा गवय इति वाक्यं तज्जनिता या
धीरागम एव। अयोपयं गवयशब्दो गोसदृशस्य वाचक इति प्रत्ययः सोप्यनुमानमेव यो हि यत्र वृद्धैः प्रयुज्यते सोऽसति वृत्त्यंतरे तस्य वाच
कः यथा गोशब्दो गोत्वस्य प्रयुज्यते चैवं गवयशब्दो गोसदृश इति तस्य वाचक इति ज्ञानमनुमानमेव यद्भवयस्य चक्षुःसन्निकृष्टस्य गो
सादृश्यज्ञानं तत्प्रत्यक्षम्। एवं च स्मर्यमाणायां गवि गवयसादृश्यज्ञानं प्रत्यक्षम्। नह्यन्यदि सादृश्यमन्यच्च गवये भूयोवयवसा
मान्ययोगो जात्यंतरवर्तिजात्यंतरे सादृश्यमुच्यते सामान्यं चैकैकः स चैकत्र गवये प्रत्यक्षो गव्यपि तथेति नोपमानस्य प्रमेयांतर
मस्ति यत्र प्रमाणांतरं भवेदिति न प्रमाणान्तरमुपमानमिति॥ एवमर्थापत्तिरपि न प्रमाणान्तरम्॥ तथाहि जीवतश्चैत्रस्य गृहाभावदर्शने
न बहिर्भावस्यादृष्टस्य कल्पनमर्थापत्तिरभिमता वृद्धानाम्॥ साप्यनुमानमेव यदा खलु व्यापकः सन्नेकत्र नास्ति तदान्यत्रास्ति यदा
ऽव्यापक एव सन्नास्ति तदान्यत्र नास्तीति सुकरः स्वशरीरे व्याप्तिग्रहः तथा च सतो गृहाभावदर्शनेन लिंगेन बहिर्भावदर्शनमनुमानमेव न च चै
त्रस्याविच्छिन्नसत्त्वेन गृहाभावः प्रादेशापन्होतुम् येनासिद्धो गृहाभावो बहिर्भावेन हेतुः स्यात्। न च गृहाभावेन वा सत्त्वमपन्हूयेत येन सत्त्वमे
वानुपपद्यमानमात्मानं न बहिरवस्थापयेत्। तथाहि चैत्रस्य गृहे सत्त्वमात्रं विरुद्ध्यते गृहे सत्त्वं वा न तावद्यत्र क्वचन सत्त्वस्यास्ति विरोधो
गृहाभावेन भिन्नविषयत्वात् देशसामान्येन गृहविशेषाक्षेपेपि पाक्षिक इति समानविषयतया विरोध इति चेन्न प्रमाणानिश्चितस्य गृहे सत्त्व
[illegible]स्य पाक्षिकतया सांशयिकेन गृहे सत्त्वेन प्रतिक्षेपायोगात्। नापि प्रमाणानिश्चितो गृहाभावः पाक्षिकमस्य गृहे सत्त्वं प्रतिक्षिपन्नसत्त्वमपि प्रतिक्षि
पु सांशयिकत्वं वा पनेतुमर्हतीति युक्तम्। गृहावच्छिन्नेन चैत्राभावेन गृहे सत्त्वविरुद्धत्वात् प्रतिक्षिप्यते न तु सत्त्वमात्रम्। तस्य तत्रौदासीन्यात्। त
स्माद्गृहाभावेन सिद्धेन सतो बहिर्भावोनुमीयत इति युक्तम्॥ एतेन विरुद्धयोः प्रमाणयोर्विरोधापादनं विषयव्यवस्थापार्थापत्तेर्विषय इति रस्तम्। नि
रवच्छिन्नानवच्छिन्नयोर्विरोधाभावात्। उदाहरणान्तराणि चार्थापत्तेरनेनैव भावनीयानि तस्मान्न प्रमाणान्तरमर्थापत्तिरिति सिद्धम्॥
एवमभावोपि प्रत्यक्षमेव नहि भूतलस्य परिणामविशेषात् कैवल्यलक्षणात् [illegible] परिणामिनो हि सत एव भावा इत्यतिरिक्तः
स च परिणामभेदो ऐन्द्रियक इति नास्ति [illegible] विषयो यत्राभावाख्यं प्रमाणान्तरमभ्युपेयमिति हेमचन्द्र यथा ख्यातो सेपाट ऋक्प्रस्यागमः

सत्वेन-८
६८

जायते इति न स्यात्। न च तस्य द्वयस्य प्रपंचात्मकत्वमपि तु अप्रपंचस्य प्रपंचात्मकतया प्रतीतिर्भ्रम एव॥ येषामपि कणभक्षा
क्षचरणादीनां सत एव कारणादसतो जन्म तेषामपि सदसतोरेकत्वानुपपत्तेर्न कार्य्यात्मकं कारणमिति न प्रधानसिद्धिः॥ अ
तः प्रधानसिद्ध्यर्थं प्रथमं तावत्सत्कार्य्यं प्रतिजानीते सत्कार्य्यम्। कारणव्यापारात्प्रागिति शेषः तथा च न सिद्धसाधनं नैयायि
कतनयैरुद्भावनीयम्। यद्यपि च बीजमृत्पिण्डादिप्रध्वंसानन्तरमंकुरघटाद्युत्पत्तिरुपलभ्यते तथापि न प्रध्वंसस्य कारण
त्वमपि तु भावस्यैव बीजाद्यवयवस्य अभावात्तु भावोत्पत्तौ तस्य सर्वत्र सुलभत्वात्सर्वदा सर्वकार्य्योत्पादप्रसंग इत्यादि न्यायवार्त्तिक
तात्पर्य्यटीकायामभिहितमस्माभिः प्रपंचप्रत्ययश्चासति बाधे न शक्यो मिथ्येति वदितुमिति कणभक्षाक्षचरणमतमवशि
ष्यते तत्रेदं प्रतिज्ञातम्॥ सत्कार्य्यमिति अत्र हेतुमाह असदकरणात्॥ असच्चेत्कारणव्यापारात्पूर्वं कार्य्यं नास्य सत्त्वं कर्त्तुं केनापि शक्यम्
न हि नीलं शिल्पिसहस्रेणापि पीतं कर्त्तुं शक्यते सदसत्त्वे घटस्य धर्माविति चेत् तथाप्यसति धर्मिणि न तस्य धर्मः सत्त्वं तदवस्थमेव तथा च
नासत्त्वम्॥ असंबद्धेन तादात्म्येन चासत्त्वेन कथमसन् घटः तस्मात्कारणव्यापारादूर्द्ध्वमिव ततः प्रागपि सदेव कार्य्यमिति कारणा
च्चास्य सतोऽभिव्यक्तिरवशिष्यते सतश्चाभिव्यक्तिरुपपन्ना यथा पीडनेन तिलेषु तैलस्य अवघातेन धान्येषु तण्डुलानां दोहनेन सौ
रभेयीषु पयसः असतः करणे तु न निदर्शनं किंचिदस्ति न खल्वभिव्यज्यमानं चोत्पद्यमानं वा क्वचिदसद्दृष्टम्॥ इतश्च कारण
व्यापारात्प्राक्सदेव कार्य्यमित्याह उपादानग्रहणात् उपादानानि कारणानि तेषां ग्रहणं कार्य्येण संबंधः उपादानैः कार्य्य
स्य संबंधादिति यावत् एतदुक्तं भवति कार्य्येण संबद्धं कारणं कार्य्यजनकम् संबंधश्च कारणैः कार्य्यस्यासतो न संभवति तस्मा
त्सदिति स्यादेतत् असंबद्धमेव कारणैः कार्य्यं कस्मान्न जन्यते तथा चासदेवोत्पत्स्यते इत्यत आह सर्वसंभवाभावात्॥ असंबद्ध
स्य जन्यत्वे संबद्धत्वाविशेषेण सर्वं कार्यजातं सर्वस्माद्भवेत् न चैतदस्ति तस्मान्नासंबद्धमसंबद्धेन जन्यते॥ यथाहुः सांख्यवृद्धाः असत्त्वे
नास्ति संबंधः कारणैः सत्त्वसंगिभिः [illegible] स्यादेतत् असंबद्धमपि तदेव करोति यत्र यत्कार

7

एतदुक्तं भवति न प्रत्यक्षनिवृत्तिमात्राद्वस्त्वभावो भवितुमर्हति अतिप्रसंगात्। तथा हि गृहाद्विनिर्गतो गृहजनमपश्यंस्तद भावं विनिश्चिनुयात्, अपि तु योग्यप्रत्यक्षनिवृत्तेरयमभावं विनिश्चिनोति। न च प्रधानपुरुषादीनामस्ति प्रत्यक्ष योग्यतेति तन्निवृत्तिमात्रान्न तदभावनिश्चयो युक्तः प्रामाणिकानामिति। कतमत्पुनरेषु कारणं प्रधानादीनामनुपल ब्धावित्यत आह॥ सौक्ष्म्यात्तदनुपलब्धिर्नाभावात्कार्यतस्तदुपलब्धेः महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च॥८॥ प्रधानादेः सौक्ष्म्यमस्ति चेत् तेषामनुपलब्धिः कस्मान्न भवत्यभावात् अत आह नाभावात् कुतः कार्यतस्तदुपलब्धेः तदिति प्र धानं परामृशति पुरुषोपलम्भे तु प्रमाणं वक्ष्यति संघातपरार्थत्वादिति। दृढतरप्रमाणावधारिते हि प्रत्यक्षमप्रवर्त्तमा नमयोग्यत्वान्न प्रवर्त्तत इति कल्प्यते अप्रमस्तु रसो न प्रमाणेनावधारित इति न तत्र प्रत्यक्षायोग्यताधिकाध्यवसायेनुमि त्यभिप्रायः। किं पुनस्तत्कार्यं यतः प्रधानानुमानमित्यत आह महदादि तच्च कार्यम्। एतच्च यथागमकं तथोपरिष्टादुप पादयिष्यते तस्य च कार्यस्य विवेकज्ञानोपयोगिनी सारूप्यवैरूप्ये आह प्रकृतिसरूपं विरूपं च॥८॥ असदकरणादुपादा नग्रहणात्सर्वसंभवाभावात्॥ शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्॥९॥ कार्यात्कारणमात्रं गम्यते सन्ति चात्र वादिनां विप्रतिपत्तयः केचिदाहुरसतः सज्जायत इति एकस्य सतो विवर्त्तः कार्यजातं न वस्तु सदित्यपरे। अन्ये तु सतोऽ सज्जायत इति सतः सज्जायत इति वृद्धाः॥ तत्र पूर्वस्मिन्विकल्पत्रये प्रधानं न सिध्यति सुखदुःखमोहभेदवच्छब्दाद्यात्मकं हि जगत्तत्कारणस्य प्रधानत्वं सत्वरजस्तमःस्वभावकत्वं कल्पयति॥ यदि पुनरसतः सज्जायेत असन्निरूपाख्यं का रणं सुखादिशब्दाद्यात्मकं कथं स्यात् सदसतोस्तादात्म्यानुपपत्तेः। अथ सतो विवर्त्तः शब्दादिप्रपञ्चस्तथापि सतः स

८

प४

रीरस्य वा घटमुकुटादयो विशेषा निःसरंति आविर्भवन्त उत्पद्यन्त इत्युच्यंते निविशमाना स्तिरोभवन्तो विनश्यन्तीत्युच्यंते। न
पुनरसतामुत्पादः सतां वा निरोधः॥ यथाह भगवान् कृष्णद्वैपायनः॥ नासतो विद्यते भावो नाभावो विद्यते सतः इति यथा कूर्मः
स्वावयवेभ्यः संकोचिविकाशिभ्यो न भिन्नः एवं घटमुकुटादयोपि मृत्सुवर्णादिभ्यो न भिन्नाः एवं चेह तंतुषु पट इति व्यप
देशः यथेह वने तिलका इत्युपपन्नः। न चार्थक्रियाभेदो भेदमापादयति एकस्यापि नानार्थक्रियाभेददर्शनात् यथैक एव
वह्निर्दाहकः प्रकाशकः पाचकश्चेति नाप्यर्थक्रियाव्यवस्थावस्तुभेदहेतुः तेषामेव च व्यस्तसमस्तानामर्थक्रियाव्यव
स्थादर्शनात्॥ यथा प्रत्येकं विष्टयो वर्त्मदर्शनलक्षणामर्थक्रियां कुर्वन्ति न तु शिबिकावाहनं मिलितास्तु शिबिकां वह
न्ति एवं तंतवः प्रत्येकं प्रावरणमकुर्वाणा अपि मिलिता आविर्भूतपटभावाः प्रावरिष्यंति स्यादेतत् आविर्भावः पटस्य
कारणव्यापारात्प्रागसन् सन्वा असंश्चेत्प्राप्तं तर्ह्यसदुत्पादनम् अथ सन् कृतं तर्हि कारणव्यापारेण न हि सति कार्ये का
रणव्यापारप्रयोजनम् आविर्भावे चाविर्भावान्तरकल्पनेनवस्थाप्रसंगः तस्मादाविर्भूतपटभावास्तंतवः क्रियन्त इति रि
क्तं वचः मैवम्॥ अथासदुत्पद्यत इति मते केयमसदुत्पत्तिः सत्सम्बन्धो वा सत्ता चेत्केन तर्हि कारणैः असती चेत्स्यात्कथमुत्प
त्त्यनन्तरमपि स्यान्नवस्था अथोत्पत्तिः पटान्नार्थान्तरमपितु पट एवासौ तथाहि यावदुक्तं भवति पट इति तावदुक्तं भवति उत्पद्य
त इति तत्र पट इत्युक्ते उत्पद्यत इति न वाच्यम्॥ पौनरुक्त्यात् विनश्यतीत्यपि न वाच्यम्. विरोधात् तस्मादियं पटोत्पत्तिः
स्वकारणसमवायो वा स्वसत्तासमवायो वा उभयथापि नोत्पद्यते अथ च तदर्थं निष्कारणेन निव्यापार्यन्ते एवं सत एव
पटादेराविर्भावादिरूपं कल्पनीयम् सत्कार्यमुपपन्नम् न च पटरूपेण कारकाणां संबंधः तद्रूपस्यासिद्धत्वात् [illegible] संबंधित्वाच्च कार
काणाम् अन्यथा कारकत्वाभावात्॥ तस्मात्सत्कार्यमिति सुस्थितम्. तदेवं प्रधानं साधयितुं [illegible] गुणं नक्षत्र(?)मुपपादितं
तत्साधनं साधनीयत्वात् प्रमाणदर्शितविवेकज्ञानोपयोगित्वम् [illegible] त्वमपरिणामि [illegible] अन्यथानेकमाश्रितं लिंगम्

ऽसं

8

णं शक्तस्य॥ शक्तिश्च कार्यदर्शनादवगम्यते तेन नाव्यवस्थेत्यत आह शक्तस्य शक्यकरणात् सा शक्तिः शक्तकारणाश्रया सर्वत्र वा
स्यात् शक्ये वा सर्वत्र चेत् तदवस्थैवाव्यवस्था शक्ये चेत् कथमसति शक्ये तत्रेति वक्तव्यम् शक्तिभेद एव तादृशो यतः किंचिदेव कार्यं
जनयेन्न सर्वमिति चेत् हन्त भोः शक्तिविशेषः कार्यसंबद्धोऽसंबद्धो वा संबद्धत्वे नासता संबन्ध इति सत्कार्यम्॥ असंबद्धत्वे से
वाव्यवस्थेति सुष्ठूक्तम् शक्तस्य शक्यकरणादिति इतश्च सत्कार्यमित्याह॥ कारणभावाच्च कार्यस्य कारणात्मकत्वात्
न हि कारणाद्भिन्नं कार्यमकारणं च सदिति कथं तदभिन्नं कार्यमसद्भवेत् कार्यस्य कारणाभेदसाधनानि प्रमाणानि न पटस्तंतु
भ्यो भिद्यते तंतुधर्मत्वात् इह यद्यतो भिद्यते तत्तस्य धर्मो न भवति यथा गौरश्वस्य न धर्मः धर्मश्च पटस्तंतूनाम् तस्मान्ना
र्थान्तरम् उपादानोपादेयभावाच्च नार्थान्तरत्वं तंतुपटयोः ययोरर्थान्तरत्वं न तयोरुपादानोपादेयभावः यथा घटपटयोः
उपादानोपादेयभावश्च तंतुपटयोस्तस्मान्नार्थान्तरत्वमिति इतश्च नार्थान्तरत्वं तंतुपटयोः संयोगाप्राप्त्यभावात् अर्थान्त
रत्वे हि संयोगो दृष्टो यथा कुण्डबदरयोः अप्राप्तिर्वा यथा हिमवद्विंध्ययोः न चेह संयोगाप्राप्ती तस्मान्नार्थान्तरत्वमिति॥
इतश्च तंतुभ्यः पटो न भिद्यते गुरुत्वकार्यान्तराग्रहणात् इह यस्माद्यद्भिन्नं भवति तस्मात्तस्य गुरुत्वकार्यान्तरं दृश्यते य
रू५ थैकपलकस्य स्वस्तिकस्य यो गुरुत्वकार्योऽवनतिविशेषः ततो द्विपलकस्य स्वस्तिकस्य गुरुत्वकार्योऽवनतिभेदोऽधिकः न च तथा तंतुगु
रुत्वकार्यात्पटगुरुत्वकार्यान्तरं दृश्यते तस्मादभिन्नस्तंतुभ्यः पट इति तान्येतान्यभेदसाधनान्यवीतानि॥ तदेवमभेद
सिद्धौ तंतव एव तेन तेन संस्थानभेदेन परिणताः पटो न तंतुभ्योऽर्थान्तरं पटः स्वात्मनि क्रियाविरोधबुद्धिव्यपदेशार्थक्रिया
भेदाश्च नैकान्तिकं भेदं साधयितुमर्हन्ति एकस्मिन्नपि तत्तद्विशेषाविर्भावतिरोभावाभ्यामेतेषामविरोधात् यथा कूर्मस्यांगा
नि कूर्मशरीरे निविशमानानि तिरोभवन्ति निःसरन्ति चाविर्भवन्ति न तु कूर्मतस्तदंगान्युत्पद्यन्ते प्रध्वंसन्ते वा एवमेकस्या मृदः सुव



सूतत्वविभिमम् ५

सां॰
६

तथा च विज्ञानं यथा योगेन गृह्यते परस्य बुद्धेरप्रत्यक्षत्वात् तथा ज्ञानरूपत्वात् सुखादीनामप्यप्रत्यक्षत्वं स्यादित्यभिप्रायः २

येत्याह विज्ञानमेव हर्षविषादशब्दाद्यात्मकं न पुनरितोऽन्यदस्तीति तान् प्रत्याह ॥ विषय इति विषयो ग्राह्यो विज्ञानाद्बहिरि
ति यावत् ॥ अत एव सामान्यं साधारणम् अनेकैः पुरुषैर्गृहीतमित्यर्थः विज्ञानाकारत्वे त्वसाधारण्याद्विज्ञानानां वृत्तिरू
पाणां तेऽप्यसाधारणाः स्युः तथा च चारुनर्तकीभ्रूलताभंगे बहूनां प्रतिसंधानं युक्तमन्यथा तन्न स्यादिति भावः अ
चेतनं सर्व एव प्रधानबुद्ध्यादयो ह्यचेतनाः ननु वैनाशिकवच्चेतनं बुद्धिरित्यर्थः प्रसवधर्मि प्रसवरूपो धर्मोऽस्यास्तीति प्रस
वधर्मि प्रसवधर्मेति वक्तव्ये मत्वर्थीयः प्रसवधर्मस्य नित्ययोगमाख्यातुं सरूपविरूपपरिणामाभ्यां न कदाचिदपि वियुज्यते इत्य
र्थः तत्तमव्यक्तेतिहि शेति तथा प्रधानम् यथा व्यक्तं तथाव्यक्तमपीत्यर्थः ताभ्यां वैधर्म्यं पुरुषस्याह ॥ तद्विपरीतस्तथा च
७ पुमान् स्यादेतत् अहेतुमत्त्वनित्यत्वादि प्रधानसाधर्म्यमस्ति पुरुषस्य एवमनेकत्वं व्यक्तसाधर्म्यम् ॥ तत्कथमुच्यते तद्विपरी
तः पुमानित्यत आह ॥ तथा च पुमानिति चकारोऽप्यर्थः यद्यप्यहेतुमत्त्वादिसाधर्म्यं तथापि त्रैगुण्यादिवैपरीत्यमस्त्यर्थः ११॥
त्रिगुणमित्युक्तं तत्र के गुणास्त्रयः किञ्च तदुपलक्षितमित्यत आह ॥ प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥१२॥ गुणा इति परार्थाः सत्त्वं लघु प्रकाशकमिष्टं च सत्त्वादयः क्र
मेणोद्दिश्यन्ते तदनागतावेक्षणेन तेत्र पुंस्त्वप्रीत्यादीनां यथासंख्यं वेदितव्यम् ॥ एतदुक्तं भवति प्रीतिः सुखं प्रीत्यात्म
कः सत्त्वगुणः अप्रीतिर्दुःखमप्रीत्यात्मको रजोगुणः विषादो मोहो विषादात्मकस्तमोगुणः इति ये तु मन्यन्ते प्रीतिर्न दुःखाभा
वादतिरिच्यते एवं दुःखमपि न प्रीत्यभावादन्यदिति तान् प्रत्यात्मग्रहणम् नेतरेतराभावाः सुखादयोऽपि तु भावाः आत्मग्रहणस्य
भावव्यञ्जनत्वात् प्रीतिरात्मा भावो येषां ते प्रीत्यात्मानः एवमन्यदपि व्याख्येयम् भावरूपता चैषामनुभवसिद्धा परस्पराभावात्म
कत्वे तु परस्पराश्रयापत्तेरेकस्याप्यसिद्धेरुभयासिद्धिरिति भावः स्वरूपमेषां गुणानामुक्त्वा प्रयोजनमाह प्रकाशप्रवृत्तिनिय

सावयवं परतंत्रं व्यक्तं विपरीतमव्यक्तम् ॥१०॥ हेतुः कारणं तद्वद् यस्य यो हेतुस्तमुपरिष्टाद्वक्ष्यति । अनित्यं विनाशि तिरोभावीति याव
त् ॥ अव्यापि सर्वं परिणामिनं व्याप्नोति कारणेन हि कार्यमाविष्टं न कार्येण कारणम् ॥ न च बुद्ध्यादयः प्रधानं व्याप्नुवंतीत्यव्याप
काः ॥ सक्रियं परिस्पंदवत् ॥ यथाहि बुद्ध्यादय उपात्तमुपात्तं देहं त्यजंति देहान्तरं चोपाददत इति तेषां परिस्पंदः शरीरपृथिव्यादीनां
च परिस्पंदः प्रसिद्ध एव । अनेकं प्रतिपुरुषं बुद्ध्यादीनां भेदात् । पृथिव्यादयोऽपि शरीरघटादिभेदेनानेकमेव । आश्रितं स्वकारणमा
श्रितं बुद्ध्यादि कार्यम् । भेदेऽपि कार्यकारणयोराश्रयाश्रयिभावः । यथेह वने तिलकाः सुक्तम् । लिंगं प्रधानस्य यथा चैते बुद्ध्याद
यः प्रधानस्य लिंगं तथोपरिष्टाद्वक्ष्यति । प्रधानं तु प्रधानस्य लिंगं पुरुषस्य लिंगं भवत्येवेति भावः ॥ सावयवमिति । अवयवनमवयवो मिथः
संश्लेषो मिश्रणं संयोग इति यावत् ॥ अप्राप्तिपूर्विका प्राप्तिः संयोगस्तेन सह वर्त्तत इति सावयवम् । तथाहि पृथिव्यादयः परस्परं संयुज्य
न्ते एवमन्येऽपि न तु प्रधानस्य बुद्ध्यादिभिः संयोगस्तादात्म्यात् नापि सत्त्वरजस्तमसां परस्परसंयोगः अप्राप्तेरभावात् । परतंत्रम् बुद्ध्यादि
स्वकार्येऽहंकारे जनयितव्ये प्रकृत्यापूरमपेक्षते अन्यथा क्षीणा सती नालमहंकारं जनयितुमिति स्थितिः एवमहंकारादिभिरपि स्व
कार्यजनने इति सर्वं स्वकार्ये प्रकृत्यापूरमपेक्षन्ते तेन प्रकृतिं परामपेक्ष्यमाणं कारणमपि कार्यापजनने परतंत्रं व्यक्तं विपरीतमव्यक्तं
अव्यक्तं अहेतुमन्नित्यं व्यापि निष्क्रियम् । यद्यप्यव्यक्तस्यास्ति परिणामलक्षणा क्रिया तथापि परिस्पंदो नास्तीति एकमनाश्रितमलिं
गमनवयवं स्वतंत्रमव्यक्तम् ॥१०॥ तदनेन प्रबंधेन व्यक्ताव्यक्तयोर्वैधर्म्यमुक्तं संप्रति तयोः साधर्म्यं पुरुषाच्च वैधर्म्यमाह ॥ त्रिगुण
मविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥११॥ त्रयो गुणाः सुखदुःखमोहा अस्येति त्रि
गुणम् ॥ तदनेन सुखादीनामात्मगुणत्वं पराभिमतमपाकृतम् । अविवेकि यथा प्रधानं न स्वतो विविच्यते एवं महदादयोऽपि न प्रधाना
द्विविच्यंते तदात्मकत्वात् । अथवा [illegible] यत उकस्य चिदेन चित्त्वं भवइति

१०

प्रवृत्तिप्रतिबंधकेन केनचिदेव प्रवर्त्यत इति ततस्तमो व्यावर्त्यात तमोनियामकमुक्तम्॥ गुरुवरणकमेव तम इति एवकारः
प्रत्येकं भिन्नक्रमः सत्त्वमेव रज एव तम एव ननु परस्परविरोधशीला गुणाः सुंदोपसुंदवत्परस्परं ध्वंसेरन्निति त्वे
वं युक्तं कुतः एषामेव तेषामेकक्रियाकर्तृत्वमित्यत आह॥ प्रदीपवच्चार्थतो वृत्तिः दृष्टमेतद्यथा वर्त्तितैले अनलविरोधिनी अथ
च मिलिते सहानलेन रूपप्रकाशनलक्षणं कार्यं कुरुतः यथा वातपित्तश्लेष्माणः परस्परविरोधिनः शरीरधारणलक्षण
कार्यकारिणः एवं सत्त्वरजस्तमांसि मिथो विरुद्धान्यप्यनुवर्त्स्यंके रिष्यंति च अर्थत इति पुरुषार्थत इति यावत् यथा च वक्ष्यति
पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणमिति अत्र सुखदुःखमोहाः परस्परविरोधिनः स्वानुरूपाणि सुखदुःखमोहात्मका
न्येव निमित्तानि कल्पयंति तेषां च परस्परमभिभाव्याभिभावकभावान्नानात्वम्॥ तद्यथा एकैव स्त्री रूपयौवनकुलशीलसं
पन्ना स्वामिनं सुखाकरोति तत्कस्य हेतोः स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात् सैव स्त्री सपत्नीर्दुःखाकरोति तत्कस्य हेतोस्ताः प्रति
तस्याः दुःखरूपसमुद्भवात्॥ एवं पुरुषान्तरं तामविंदत् सैव मोहयति तत्कस्य हेतोः तं प्रति तस्या मोहरूपसमुद्भवात् अनया स्त्रिया
सर्वे भावा व्याख्याताः तत्र यत्सुखहेतुस्तत्सुखात्मकं सत्त्वगुणः यद्दुःखहेतुस्तद्दुःखात्मकं रजः यन्मोहहेतुस्तन्मोहात्मकं तमः सु
खप्रकाशलाघवानां चैकस्मिन्युगपदुद्भूतावविरोधः सहदर्शनात् तस्मात्सुखदुःखमोहैरिव विरोधिभिरविरोधिभिः सु
खप्रकाशलाघवैर्न निमित्तभेदा उन्नीयंते एवं दुःखोपष्टंभकत्वप्रवर्तकत्वैः एवं मोहगुरुत्वावरणैरिति सिद्धं त्रैगुण्यमिति॥
स्यादेतत् अनुभूयमाने पृथिव्यादिषूभयसिद्धं भवतु अविवेकित्वादयः ये पुनः सत्त्वादयो नानुभवपथमवरोहंतीति ते
षां कुतस्त्यमविवेकित्वं विषयत्वं सामान्यत्वमचेतनत्वं प्रसवधर्मित्वं चेत्यत आह॥ अविवेक्यादेः सिद्धं त्रैगुण्यात्तद्विपर्यया
भावात् कारणगुणात्मकत्वात्कार्यस्याव्यक्तमपि सिद्धम्॥१४॥ अविवेकित्वमविवेकि यथा द्व्येकयोर्द्विवचनैकवचने इत्यत्र
द्वित्वैकत्वयोरिति अन्यथा ह्येकेति स्यात् कुतः पुनरविवेकित्वादिसिद्धिरित्यत आह त्रैगुण्यात् यद्यत्सुखदुःखमोहात्मकं

मार्थाः। अत एव यस्मात् प्रवर्तकत्वात् रजः प्रवर्तकत्वात्सर्वत्र लघु सत्त्वं प्रवर्तयेत्। यदि तमसा गुरुणा न नियम्येत तमोनियतं तु क्वचिदेव प्रवर्तयतीति भवति तमो नियमार्थम्॥ प्रयोजनमुक्त्वा क्रियामाह॥ अन्योन्याभिभवाश्रयजननमिथुनवृत्तय ने
श्च वृत्तिः क्रिया सा च प्रत्येकमभिसंबध्यते॥ अन्योन्याभिभववृत्तयः। एषामन्यतमेनार्थवशादुद्भूतेनान्यदभिभूयते तथाहि
मि३ सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते एवं रजः सत्त्वतमसी अभिभूय घोराम्॥ एवं तमः सत्त्वरजसी अभिभू
य मूढामिति अन्योन्याश्रयवृत्तयः यद्यप्याधाराधेयभावेन नायमर्थो घटते तथापि यदपेक्षया यस्य क्रिया स तस्याश्रयः
तथाहि सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसोः प्रकाशेनोपकरोति रजः प्रकाशनियमावाश्रित्य प्रवृत्त्येतरयोः तमः प्रका
ने२ शप्रवृत्ती आश्रित्य नियमेनेतरयोरिति अन्योन्यजननवृत्तयः अन्यतमोऽन्यतमं जनयति जननं च परिणामः स च गुणानां
सदृशरूपः॥ अत एव न हेतुमत्त्वं तत्त्वान्तरस्य हेतोरभावात्॥ नाप्यनित्यत्वं तत्त्वान्तरे लयाभावात् अन्योन्यमिथुनवृत्तयः॥
सत्वं अन्योन्यसहचरा अविनाभावेन वर्त्तिन इति यावत्॥ चः समुच्चये भवति चात्रागमः अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः र
जसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः तमसश्चापि मिथुने ते सत्त्वरजसी उभे उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते नैषामादिः संप्रयोगो
वियोगो वोपलभ्यते इति॥१२॥ प्रकाशप्रवृत्तिनियमार्था इत्युक्तं तत्र के ते इत्यपेक्षायामाह॥ सत्त्वं लघु प्रकाशकमिष्ट
मुपष्टम्भकं चलं च रजः॥ गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः॥१३॥ सत्त्वमेव लघु प्रकाशकमिष्टं सांख्याचार्यैः तत्र का
र्योद्गमने हेतुर्धर्मो लाघवं गौरवप्रतिद्वन्द्वि यतोऽग्नेरूर्ध्वज्वलनं भवति तदेव लाघवं कस्यचित्तिर्यग्गमने हेतुर्भवति यथा वा
योः एवं करणानां वृत्तिपटुत्वहेतुर्लाघवं गुरुत्वे मन्दानि स्युरिति सत्त्वं प्रकाशात्मकत्वमुक्तं सत्त्वतमसी स्वयमक्रियतया स्वका
र्यप्रवृत्तिं प्रत्यवसीदन्ती रजसोपष्टभ्येते अवसादात्प्रच्याव्य स्वकार्ये उत्साहं प्रयत्नं कार्येते इति तदिदमुक्तमुपष्टम्भकं रजः इति क
स्मादित्यत उक्तं चलमिति तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम्॥ रजस्तु चलतया परितस्त्रैगुण्यं चालयद्गुरुणावृण्वता च तमसा तत्र तत्र

स्य३

सां.कौ.

११

आदयस्तन्मात्राणि विशंतः स्वापेक्षया तन्मात्राण्यव्यक्तयंति एवं तन्मात्राण्यहंकारं विशन्तोऽहंकारमव्यक्तयंति एवं महंका
रो महांतमाविशन् महान्तमव्यक्तयति महान् प्रकृतिं स्वकारणं विशन् प्रकृतिमव्यक्तयति प्रकृतेस्तु न क्वचिन्निवेश इ
ति सर्वकार्याणामव्यक्तमेव सोयमविभागः प्रकृतौ वैश्वरूपस्य नानारूपस्य कार्यस्य स्वार्थिकः ष्यञ् तस्मात्कारणे
कार्यस्य सत एव विभागाविभागाभ्यामव्यक्तं कारणमस्तीति इतश्चाव्यक्तमस्तीत्याह । शक्तितः प्रवृत्तेश्च कारणश
क्तितः कार्यं प्रवर्त्तते इति सिद्धम् अशक्तात्कारणात्कार्यस्यानुत्पत्तेः शक्तिश्च कारणगता न कार्यस्याव्यक्तत्वादन्या नहि
सत्कार्यपक्षे कार्यस्याव्यक्ततायाः अन्यस्यां शक्तौ प्रमाणमस्ति अयमेव हि सिकताभ्यः तिलानां तैलोपादानानां भेदो

11

यदेतेष्वेव तैलमस्त्यनागतावस्थं न सिकतास्विति स्यादेतत् शक्तितः प्रवृत्तेः कार्यकारणविभागाविभागाच्च महत
एव परमाव्यक्तत्वं साधयिष्यतः कृतं परेणाव्यक्तेनेत्यत आह परिमाणात् परिमितत्वादव्यापित्वादिति यावत् वि
वादाध्यासिता भेदाः अव्यक्तकारणवन्तः परिमितत्वात् घटादिवत् घटादयो हि परिमिता मृदाद्यव्यक्तकारणका दृ
ष्टाः उक्तमेतत् यथा कार्यस्याव्यक्तावस्था कारणमेवेति यन्महतः कारणं तत्परमाव्यक्तं [illegible] ततः परतराव्यक्तक
ल्पनायाः प्रमाणाभावात् ॥ इतश्च विवादाध्यासिता भेदा अव्यक्तकारणवन्तः समन्वयात् भिन्नानां समरूपता सम
न्वयः सुखदुःखमोहसमन्विता हि बुद्ध्यादयोऽध्यवसायादिलक्षणाः प्रतीयन्ते यानि च यद्रूपमनुगतानि तानि तत्
स्वभावाव्यक्तकारणकानि यथा मृत्पिण्डसमनुगताः कुटमुकुटादयो मृत्पिण्डाव्यक्ताकारणका इति कारण
मस्त्यव्यक्तं भेदानामिति सिद्धम् ॥१५॥ अव्यक्तं साधयित्वा स्य प्रवृत्तिप्रकारमाह ॥ कारणमस्त्यव्यक्तं प्रवर्त्तते त्रिगु
णतः समुदयाच्च परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥१६॥ प्रतिसर्गावस्थायां सत्त्वं रजस्तमश्च स

तदविवेक्यादि यथेदमनुभूयमानं व्यक्तमिति स्फुटत्वादन्वयेनोक्तम्॥ व्यतिरेकमाह॥ तद्विपर्य्ययाभावात् अविवेक्या
दिविपर्य्ययेषु पुरुषेषु त्रैगुण्याभावात् अथवा व्यक्ताव्यक्ते पक्षीकृत्यान्वयाभावे ऽवीत एव हेतुस्त्रैगुण्यादिति कर्त्तव्यः
स्यादेतत् अव्यक्तसिद्धौ सत्यां तस्याविवेकित्वादयो धर्माः सिध्यन्ति अव्यक्तमेव त्वद्यापि न सिद्धं तत्कथमविवेकि
त्वादिसिद्धिरित्यत आह कारणगुणात्मकत्वादिति अयमभिसंधिः कार्य्यं हि कारणगुणात्मकं पटादि तथा मह
दादिलक्षणेनापि कार्य्येण सुखदुःखमोहरूपेण स्वकारणगतसुखदुःखमोहात्मना भवितव्यं तथा च तत्कारणं
सुखदुःखमोहात्मकं प्रधानमव्यक्तं सिद्धं भवति॥१४॥ स्यादेतत्॥ व्यक्ताद्व्यक्तमुत्पद्यते इति कणभक्षाक्षच
रणतनयाः परमाणवो हि व्यक्तास्ते द्व्यणुकादिक्रमेण पृथिव्यादिलक्षणं कार्य्यमारभन्ते पृथिव्यादिषु च कारण
गुणक्रमेण रूपाद्युत्पत्तिस्तस्माद्व्यक्ताद्व्यक्तस्य तद्गुणस्य चोत्पत्तेः कृतमदृष्टचरेणाव्यक्तेनेत्यत आह॥ भेदानां प
रिमाणात्समन्वयाच्छक्तितः॥ प्रवृत्तेश्च कारणकार्य्यविभागादविभागाद्वैश्वरूपस्य॥१५॥ भेदानां विशेषाणां
महदादीनां भूमिपर्यन्तानां कारणमस्त्यव्यक्तम्॥ कुतः कारणकार्य्यविभागात् अविभागाद्वैश्वरूपस्य कारणे सत्कार्य
मिति स्थितम्॥ तथा च यथा कूर्मस्य शरीरे सन्त्येवाङ्गानि निःसरन्ति विभज्यन्ते इदं कूर्मशरीरमेतानि तस्याङ्गानि एवं निवि
शमानानि तस्मिन्नव्यक्तीभवन्ति एवं कारणान्मृत्पिण्डाद्धेमपिंडाद्वा घटमुकुटादयो निःसरन्तो विभज्यन्ते एवमेव
पृथिव्यादीनि कारणात्तन्मात्रादाविर्भवन्ति विभज्यन्ते स चैव तन्मात्राण्यहंकारात् स चैवाहंकारः कारणान्महतः
स चैव च महान् परमाव्यक्तादिति सोऽयं कारणात्परमाव्यक्तात्साक्षात्पारंपर्येण विश्वस्य विभागः प्रतिसर्गे तु मृत्पिंडं सु
वर्णपिंडं वा घटमुकुटादयो [illegible] अव्यक्तं कार्य्यमपेक्ष्याव्यक्तं भवति एवं पृथि

५ए

गी५

मानोऽछेदप्रसंगऽस्युपपादितं न्यायवार्त्तिकतात्पर्य्यटीकायाम् अस्माभिः तस्मादनवस्थाभियास्यां संघातत्वमिच्छताऽत्रि
गुणत्वं विवेकित्वमविषयत्वमसामान्यत्वं चेतनत्वमप्रसवधर्म्मित्वं चाभ्युपेयं त्रिगुणत्वादयो हि धर्म्माः संहतत्वेन व्या
प्ताः तत्संहतत्वमस्मिन्परे आवर्त्तमानं त्रैगुण्यादि व्यावर्त्तयति ब्राह्मणत्वमिव व्यावर्त्तमानं कठत्वादि व्यावर्त्तयति
तस्मादाचार्य्येणात्रिगुणादि विपर्य्ययादित्ति वदताऽसंहतः परो विवक्षितः स चात्मेति सिद्धम् ॥ इतश्च पुरुषोऽस्ति
अधिष्ठानात् त्रिगुणात्मकानामधिष्ठीयमानाः सुखदुःखमोहात्मकत्वात् यद्यत्सुखदुःखमोहात्मकं तत्सर्वं
परेणाधिष्ठीयमानं दृष्टं यथा रथादि यन्त्रादिभिः सुखदुःखमोहात्मकं चेदं बुद्ध्यादि तस्मादेतदपि परेणाधि
ष्ठातव्यं स च परस्त्रैगुण्यादन्य आत्मेति
इतश्च पुरुषोऽस्ति भोक्तृभावात् भोक्तृभावेन
भोग्ये सुखदुःखे उपलक्षयति भोज्ये हि सुखदुःखे अनु
कूल प्रति[illegible] कूले वेदनीये प्रत्यात्ममनुभूये
ते इति नानयोरनुकूलीये न प्रतिकूलीयेन च केन
चिदप्यन्येन भवितव्यं न चानुकूलनीयाः प्रतिकूल
नीया वा बुद्ध्यादयस्तेषां सुखात्मकत्वेन स्वात्मनि
वृत्तिविरोधात् तस्माद्योऽसुखाद्यात्मा सोऽनुकूलनीयः

सदृशपरिणामा भवंति परिणामस्वभावा हि गुणा नापरिणम्य क्षणमप्यवतिष्ठंते तस्मात्सत्वं सत्वरूपतया रजो रजोरू
पतया तमस्तमोरूपतया प्रतिसर्गावस्थायामपि प्रवर्त्तंते तदिदमुक्तम् त्रिगुणत इति प्रवृत्त्यंतरमाह समुदायाच्चेति समे
त्योदयः समुदयः समवायः स च गुणानां न गुणप्रधानभावमंतरेण संभवति न च गुणप्रधानभावो वैषम्यं विना न च
वैषम्यमुपमर्द्योपमर्दकभावादृते इति महदादिभावेन प्रवृत्तिर्द्वितीया स्यादेतत् कथमेकरूपाणां गुणानामनेकरूपा
प्रवृत्तिरित्यत आह ॥ परिणामतः सलिलवत् यथा हि वारिदविमुक्तमेकरसमपि तत्तद्भूविकारानासाद्य नारिकेलताल
ताली बिल्वचिरबिल्वतिंदुकामलकप्राचीनामलककपित्थफलरसतया परिणमन्मधुराम्ललवणतिक्तकषायकटुतया विक
ल्प्यते एवमेकैकगुणसमुद्भवात् प्रधानगुणमाश्रित्याप्रधानगुणाः परिणामभेदान्प्रवर्त्तयंति तदिदमुक्तम् ॥ प्रतिप्र
ति गुणाश्रयविशेषात् एकैकगुणाश्रयो यो विशेषस्तस्मादित्यर्थः ॥१६॥ ये तु नैष्ठिका अव्यक्तं महान्तं वाहंकारं वा इन्द्रियाणि वा भूता
नि वात्मानमभिमन्यमानास्तान्येवोपासते तान्प्रत्याह ॥ संघातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात् ॥ पुरुषोऽस्ति भोक्तृभाव
त्कैवल्यार्थं प्रवृत्तेश्च ॥१७॥ अव्यक्तादिव्यतिरिक्तः पुरुषोऽस्ति कुतः संघातपरार्थत्वात् अव्यक्तमहदहंकारादयः परार्थाः
संघातत्वात् शयनासनाभ्यंगादिवत् सुखदुःखमोहात्मकतयाव्यक्तादयः सर्वे संघाताः स्यादेतत् शयनासनादयः संघाताः
संहतशरीराद्यर्था दृष्टाः न त्वात्मानं प्रति परार्थाः तस्मात्संघाताः संघातांतरमेव परं गमयेयुर्न त्वसंहतमात्मानमि
त्यत आह त्रिगुणादिविपर्ययात् अयमभिप्रायः संघातांतरार्थत्वे हि तस्यापि संघातत्वात्तेनापि संघातांतरार्थेन भ
वितव्यमेवं तेनापि तेनापीत्यनवस्थाप्रसंगात् न च व्यवस्थायां सत्यामनवस्था युक्ता कल्पनागौरवप्रसंगात् ॥ न च प्रमाणवत्त्वेन गौर
वमपि मृष्यते इति नान्य संघातत्वस्य परार्थमात्रेण व्याप्तेः ॥ इदमत्र [illegible] विरोधे न त्वनुमानमिच्छतः सर्वानु

सां.कौ.
१३

त्ति जाते तथापि पुरुषप्रपञ्चयते तथा च तस्मिन्नेकत्र शरीरे प्रयतमाने सति सर्वशरीरेष्वेक एव इति सर्वः प्रयतेत ततश्च
सर्वाण्येव शरीराणि युगपच्चालयेत् नानात्वे तु नायं दोषः इतश्च पुरुषभेद इत्याह त्रैगुण्यविपर्य्ययाच्चैव एवकारो भिन्न
क्रमः सिद्धमित्यस्यानन्तरं द्रष्टव्यः सिद्धमेव नासिद्धम् त्रयो गुणास्त्रिगुणास्तस्य विपर्य्ययोऽन्यथाभावः केचित्खलु सत्त्वनिका
याः सत्त्वबहुलाः यथोर्ध्वरेतसः केचिद्रजोबहुलाः यथा मनुष्याः केचित्तमोबहुलाः यथा तिर्य्यग्योनयः सोऽयमीदृशस्त्रै
गुण्यविपर्य्ययोऽन्यथाभावस्तेषु तेषु सत्त्वनिकायेषु न भवेत् यद्येकः पुरुषः स्यात् पुरुषभेदे त्वयमदोषः ॥१८॥ एवं पुरुष
बहुत्वं प्रसाध्य विवेकज्ञानोपयोगितयास्य धर्म्मानाह तस्माच्च विपर्य्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य कैवल्यं माध्य
स्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥१९॥ तस्माच्चेति चः समुच्चये पुरुषबहुत्वेन सह धर्म्मान्तराणि समुच्चिनोति विपर्य्यासादित्यु
क्ते त्रैगुण्यविपर्य्ययादित्यनन्तरोक्तं संबध्येत भ्रान्तिनिरासाय तस्मादित्युक्तं अनन्तरोक्तं हि संनिधानादिदमो विषयोऽत्र वि
प्रकृष्टं च तदिति विप्रकृष्टं त्रिगुणमविवेकीत्यादि संबध्यते तस्मात्त्रिगुणत्वादेर्यो विपर्य्यासः पुरुषस्यात्रिगुण
त्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमप्रसवधर्मित्वं चेति तत्र [illegible] चेतनत्वेनाविषयत्वेन च साक्षित्व
द्रष्टृत्वे प्रदर्शिते चेतनो हि द्रष्टा भवति नाचेतनः साक्षी च दर्शितविषयो भवति यस्मै प्रदर्श्यते विषयः सः साक्षी यथा हि
लोके र्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयतः एवं प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षी
न चाचेतनाय विषयो शक्यो दर्शयितुमिति चैतन्यादविषयत्वाच्च भवति साक्षी अत एव द्रष्टापि भवति अत्रैगुण्याच्चास्य
कैवल्यमात्यन्तिको दुःखत्रयाभावः कैवल्यं तच्च तस्य स्वाभाविकादेवात्रैगुण्यात्सुखदुःखमोहरहितत्वात्सिद्धम् ॥ अत एवा
त्रैगुण्यान्माध्यस्थ्यं सुखी हि सुखेन तृप्यन् दुःखी च दुःखं द्विषन्न मध्यस्थस्तदुभयरहितस्तु मध्यस्थ इति चोदासीन इति चा

13

प्रतिकूलनीयो वा स चात्मेति अन्ये त्वाहुः भोग्याद्दृश्याद्बुद्ध्यादयः न च द्रष्टारमन्तरेण दृश्यता युक्ता तेषां तस्माद
स्ति द्रष्टा दृश्यबुद्ध्याद्यतिरिक्तः स चात्मेति भोक्तृभावात् द्रष्टृभावात् दृश्येन द्रष्टुरनुमानादित्यर्थः दृश्यत्वं च बुद्ध्या
दीनां सुखाद्यात्मकतया पृथिव्यादिवदनुमितं इतश्चास्ति पुरुष इत्याह कैवल्यार्थं प्रवृत्तेः शास्त्राणां महर्षीणां दि
व्यलोचनानां च कैवल्यं चात्यन्तिकदुःखत्रयप्रशमनलक्षणं न बुद्ध्यादीनां संभवति ते हि दुःखाद्यात्मकाः कथं स्वभावा
द्वियोजयितुं शक्यन्ते तद्व्यतिरिक्तस्य दुःखादिरहितस्य त्वात्मनस्तेनो वियोगः शक्यसंपादः तस्मात्कैवल्यार्थं प्रवृ
त्तेरागमानां महाधियां चास्ति बुद्ध्याद्यतिरिक्त आत्मेति सिद्धम् ॥१७॥ तदेवं पुरुषास्तित्वं प्रतिपाद्य स किं सर्वशरीरेष्वेकः
किमनेकः प्रतिक्षेत्रमिति संशये तस्य प्रतिक्षेत्रमनेकत्वमुपपादयति ॥ जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृ
त्तेश्च पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥१८॥ पुरुषबहुत्वं सिद्धं कस्माज्जननमरणकरणानां प्रतिनियमात् नि
कायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियाहंकारमनोबुद्धिवेदनाभिः पुरुषस्याभिसंबन्धो जन्म न तु पुरुषस्य परिणामस्त
स्यापरिणामित्वात् तेषामेव च देहादीनामुपात्तानां परित्यागो मरणं न त्वात्मनो विनाशस्तस्य कूटस्थनित्यत्वात् करणा
नि बुद्ध्यादीनि त्रयोदश तेषां जननमरणकरणानां प्रतिनियमो व्यवस्था सा खल्वियं सर्वशरीरेष्वेकस्मिन् पुरुषे नोपप
द्यते तदा खल्वेकस्मिन् जायमाने सर्वे जायेरन् म्रियमाणे च म्रियेरन् अन्धादौ चैकस्मिन् सर्व एवान्धादयो विचित्ते चैक
स्मिन् सर्व एव विचित्ताः स्युरित्यव्यवस्था प्रतिक्षेत्रं पुरुषभेदे भवति व्यवस्था न चैकस्यापि पुरुषस्य देहोपाधिभेदाद्व्यवस्थे
ति युक्तम् पाण्यादिस्तनाद्युपाधिभेदेनापि जन्ममरणाव्यवस्थाप्रसंगात् ॥ न हि पाणौ व कृत्ते जाते वा स्तनादौ महत्स्ववयवेषु
यति जी[illegible] नाम्नश्च यो भवती [illegible] प्रयत्नलक्षणा प्रवृत्तिः करणव

सां कौ.
१८

शब्दस्पर्शगुणः। शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्रात्तेजः शब्दस्पर्शरूपगुणं शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रा
दापः शब्दस्पर्शरूपरसगुणाः शब्दस्पर्शरूपरसतन्मात्रसहिताद्गन्धतन्मात्राच्छब्दस्पर्शरूपरसगन्धगुणा पृथिवी जायत
इति ॥२२॥ अव्यक्तं सामान्यतो लक्षितं तद्विपरीतमित्यनेन विशेषतश्च सत्त्वं लघुप्रकाशकमित्यादिना व्यक्तमपि सामान्य
तो लक्षितं हेतुमदित्यादिना। संप्रति विवेकज्ञानोपयोगितया व्यक्तविशेषं बुद्धिं लक्षयति ॥ अध्यवसायो बुद्धिर्धर्मो ज्ञा
नं विराग ऐश्वर्यं सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥२३॥ अध्यवसायो बुद्धिरिति क्रियाक्रियावतोरभेदविवक्ष
या सर्वो व्यवहर्त्तालोच्य मत्वाहमत्राधिकृत इत्यभिमत्य कर्त्तव्यमेतन्मयेत्यध्यवस्यति ततश्च प्रवर्त्तत इति प्रसि
द्धं तत्र योऽयं कर्त्तव्यमिति विनिश्चयश्चितिसन्निधानादापन्नचैतन्याया बुद्धेः सोऽध्यवसायो बुद्धेरसाधारणो व्यापारस्त
दभेदे बुद्धिः स च बुद्धेर्लक्षणं समानासमानजातीयव्यवच्छेदकत्वात्। तदेवं बुद्धिं लक्षयित्वा विवेकज्ञानोपयोगिनस्त
स्या धर्मान् सात्त्विकतामसानाह धर्मो ज्ञानं विराग ऐश्वर्यं सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तमिति। तत्र धर्मो
ऽभ्युदयनिःश्रेयसहेतुस्तत्र यागाद्यनुष्ठानजनितो धर्मोऽभ्युदयहेतुरष्टाङ्गयोगजनितो निःश्रेयसहेतुः सत्त्वपुरुषान्यता
ख्यातिर्ज्ञानं रागः प्रसिद्धस्तद्विपरीतो विरागः तस्य यतमानसंज्ञा व्यतिरेकसंज्ञा एकेन्द्रियसंज्ञा वशीकारसंज्ञा चेति
चतस्रः संज्ञाः। रागादयः कषायाश्चित्तवर्त्तिनस्तैरिन्द्रियाणि यथास्वविषयेषु प्रवर्त्तन्ते तन्मा प्रवर्त्तिषत विषयेष्विन्द्रि
याणीति तत्परिपाचनायारम्भः प्रयत्नो यतमानसंज्ञा परिपाचने चानुष्ठीयमाने केचित्कषायाः पक्वाः पक्ष्यन्ते केचित्तत्रैवं
पूर्वापरीभावे सति पच्यमानेभ्यः कषायेभ्यः पक्वानां व्यतिरेकावधारणं व्यतिरेकसंज्ञा। इन्द्रियप्रवृत्त्यसमर्थतया पक्वा
नामौत्सुक्यमात्रेण मनसि व्यवस्थानमेकेन्द्रियसंज्ञा [illegible] औत्सुक्यमात्रस्यापि निवृत्तिरूपस्य तेष्वपि दृष्टानुश्रविकविष



२४

कैवल्यार्थी

ग

ख्याय ते विवेकित्वाद् असंत्वधर्मित्वाच्चाकर्त्तेति सिद्धम् ॥१८॥ स्यादेतत् प्रमाणेन कर्तृत्वम् अर्थम् अवगम्य चेतनो हं चिकीर्षन्
करोमीति कृति चैतन्ययोः सामानाधिकरण्यम् अनुभवसिद्धं तदेतस्मिन्मते नावकल्प्यते चेतनस्याकर्तृत्वात्कर्तुश्चाचेत
नादित्यत आह तस्मात्तत्संयोगादचेतनं चेतनावदिव लिंगं गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीनः ॥१९॥ यत श्चैतन्यक
र्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे तस्माद्भ्रान्तिरियमित्यर्थः लिंगं महदादि सूक्ष्मपर्यन्तं वक्ष्यति भ्रान्तिबीजं तत्संयोगस्तत्स
न्निधानम् अतिरोहितार्थमन्यत् ॥१९॥ तत्संयोगादित्युक्तं न च भिन्नयोः संयोगोपेक्षां विना न च योग्यम् उपकार्योपकारकस्वभा
वं विनेत्यत आह पुरुषस्य दर्शनार्थं तथा प्रधानस्य संबंधवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥२०॥ प्रधानस्येति कर्मणि ष
ष्ठी प्रधानस्य सर्वकारणस्य यद्दर्शनं पुरुषेण तदर्थं तदनेन भोग्यता प्रधानस्य दर्शिता ततश्च भोग्यं प्रधानं भोक्तारमंतरे ण
न संभवतीति पुरुषाभोक्तुरपेक्षा पुरुषस्यापेक्षा दर्शयति पुरुषस्य कैवल्यार्थं तथा भोग्येन प्रधानेन संभिन्नः पुरुषस्तद्गतं दुः
खत्रयं स्वात्मन्यभिमन्यमानः कैवल्यार्थं प्रार्थयति तच्च सत्त्वपुरुषान्यताख्यातिनिबंधनम् न च सत्त्वपुरुषान्यताख्यातिः प्र



धानमन्तरेणेति केवल्यार्थं पुरुषः प्रधानमपेक्षते अनादित्वाच्च संयोगपरंपराया भोगाय संयुक्तोपि कैवल्याय पुनः संयुज्यते
इति युक्तम् ॥ ननु भवत्वनयोः संयोगो महदादिसर्गस्तु कुतोस्त्यत आह तत्कृतः सर्गः संयोगो हि न महदादिसर्गमंतरेण भोगा
य कैवल्याय वा पर्याप्त इति संयोग एव भोगापवर्गार्थं महदादिसर्गं करोतीत्यर्थः ॥२०॥ सर्गक्रममाह ॥ प्रकृतेर्महांस्ततो
हंकारस्तस्माद्गणश्च षोडशकः तस्मादपि षोडशकात्पंचभ्यः पंचभूतानि ॥२१॥ प्रकृतिरव्यक्तं महदहंकारौ वक्ष्यमाणलक्ष
णौ एकादशेन्द्रियाणि वक्ष्यमाणानि तन्मात्राणि च सोयं षोडशसंख्यापरिमितो गणः षोडशकः तस्मादपि षोडशकादपकृष्टेभ्यः

पंचभ्यस्तन्मात्रेभ्यः पंचभूतान्याकाशादीनि तत्र शब्दतन्मात्रादाकाशं शब्दगुणं शब्दतन्मात्रसहितात्स्पर्शतन्मात्राद्वायुः

स्तथापि गुणभेदोद्भवाभिभवाभ्यां भिन्नं कार्यं करोतीति ॥ ननु यदि सत्त्वतमोभ्यामेव सर्वं कार्यं जन्यते तर्हि रजसा न कि
ञ्चित्करणीयम् अतो रजसो व्यर्थत्वमाह ॥ तैजसादुभयमिति एतदुभयं भवति यद्यपि रजसो न कार्यान्तरमस्ति तथापि स
त्त्वतमसी स्वयमक्रिये समर्थे अपि न स्वकार्यं कुरुतः रजस्तु चलतया ते यदा चालयति तदा स्वकार्यं कुरुत इति तदुभय
स्मिन्नपि कार्ये सत्त्वतमसोः क्रियोत्पादनद्वारेणास्ति रजसः कारणत्वमिति न व्यर्थं रज इति ॥२४॥ सात्त्विकमेकादश
कमाख्यातं तावदिन्द्रियदशकं तावदाह बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनात्वगाख्यानि वाक्पाणिपादपायूप
स्थान् कर्मेन्द्रियाण्याहुः ॥२५॥ सात्त्विकाहङ्कारोपादानत्वमिन्द्रियत्वं तच्च द्विविधं बुद्धीन्द्रियं कर्मेन्द्रियं चोभयमप्येतदि
न्द्रस्यात्मनश्चिह्नत्वादिन्द्रियमित्युच्यते तानि च स्वसंज्ञाभिश्चक्षुरादिभिरुक्तानि तत्र रूपग्रहणलिङ्गं चक्षुः शब्दग्र
हणलिङ्गं श्रोत्रं गन्धग्रहणलिङ्गं घ्राणं रसग्रहणलिङ्गं रसनं स्पर्शग्रहणलिङ्गं त्वक् वागादीनां कार्यं वक्ष्यति ॥२५॥
एकादशमिन्द्रियमाह उभयात्मकमत्र मनः संकल्पकमिन्द्रियं च साधर्म्यात् ॥ गुणपरिणामविशेषान्नाना
त्वं बाह्यभेदाश्च ॥२६॥ एकादशस्विन्द्रियेषु मध्ये मन उभयात्मकं बुद्धीन्द्रियं कर्मेन्द्रियं च चक्षुरादीनां वागादी
नां च मनोऽधिष्ठितानां स्वविषयेषु प्रवृत्तेः तत्त्वसाधारणेन रूपेण लक्षयति संकल्पकमत्र मनः आलोचितमि
न्द्रियेण वस्त्विदमिति संदिग्धमिदमेवं नैवमिति सम्यक् कल्पयति विशेषणविशेष्यभावेन विवेचयतीति
यावत् यदाहुः सम्मुग्धं वस्तुमात्रं च प्राग्गृह्णात्यविकल्पितम् ॥ तत्सामान्यविशेषाभ्यां कल्पयति मनीषिणः तथा हि अ
स्ति हि आलोचनज्ञानं प्रथमं निर्विकल्पकं बालमूकादिविज्ञानसदृशं शुद्धवस्तुजमिति ततः परं पुनर्वस्तुधर्मैर्जात्यादिभि
र्यया बुद्ध्याध्यवसीयते सापि प्रत्यक्षत्वेन संमता सोऽयं संकल्पलक्षणो व्यापारो मनसः समानासमानजातीयाभ्यां व्यवच्छेद



वि३

येषु यासंज्ञा त्रयामरीचीनां सा दृष्टिकारसंज्ञायाः अत्र भगवान्पातंजलिर्विवर्णयांचकार इत्यानुश्रविकविषयेषि तृष्णाया व
शीकारसंज्ञा वैराग्यमिति ॥ सोयं बुद्धेर्धर्मो विरागः इति ऐश्वर्य्यमपि बुद्धिधर्म्मो यतोऽणिमादिः प्रादुर्भवति तत्राणिमा भव
त्यणुः यतः शिलामपि विशति लघिमा लघुर्भवति यतः सूर्य्यमरीचीनालंब्य सूर्य्यलोकं याति महिमा यतो महान्भवति
गरिमा यतो गुरुर्भवति प्राप्तिर्यतः अंगुल्यग्रेण स्पृशति चन्द्रमसं प्राकाम्यमिच्छानभिघातो यतो भूमावुन्मज्जति निमज्जति
यथोदके वशित्वं भूतभौतिकानि वशीभवंति विवश्यम् ईशित्वं भूतभौतिकानां प्रभवस्थेयानामीष्टे यत्रकामावसायि
त्वं सत्यसंकल्पता यथास्य संकल्पो भवति भूतेषु तथाभूतानि भवंति अन्येषां निश्चयाः निश्चितव्यमनुविधीयन्ते योगिनस्तु
निश्चितव्या पदार्था निश्चयमिति चत्वारः सात्त्विका धर्म्मास्तामसास्तु तद्विपरीता बुद्धिधर्म्माः अधर्म्माज्ञानावैराग्यानै
श्वर्य्याभिधानाश्चत्वार इत्यर्थः २२ अहंकारस्य लक्षणमाह ॥ अभिमानोहंकारस्तस्माद्द्विविधः प्रवर्त्तते सर्गः एका
दशकश्च गणस्तन्मात्रकपंचकश्चैव २३ अभिमानोहंकारो यतस्तवल्यालोचितं मतं च तत्राहमधिकृतः शक्तः खल्वह
मत्र मदर्था एवामी विषया मत्तो नान्योत्राधिकृतः कश्चिदस्यतोहमस्मीति योभिमानः सोहंकारव्यापारत्वादहंकारस्तमु
पजीव्य हि बुद्धिरध्यवस्यति कर्त्तव्यमेतन्मयेति तस्य कार्य्यभेदमाह तस्माद्द्विविधः प्रवर्त्तते सर्गः प्रकारद्वयमाह एकादशक
श्च गण इन्द्रियाह्वयः तन्मात्रकपंचकश्चैव द्विविध एव सर्गोहंकारान्नत्वन्यत इति एवकारेणावधारयति २३ स्यादेत
दहंकारादेकरूपात्कथं जडप्रकाशकौ विलक्षणौ भवतः इत्यत आह सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहंकारात्
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥ २४ ॥ प्रकाशलाघवाभ्यामेकादशक इंद्रियगणः सात्त्विको वैकृतात्सात्त्वि
कादहंकारात्प्रवर्त्तते भूतादेस्तु अहंकारात्तामसात्तन्मात्रगणः प्रवर्त्तते यतः स तामसः एतदुक्तं भवति यच्चैकोहंकार

मभिमुखमतिसंनिहितं पश्यति तदा खल्वस्यालोचनसंकल्पाभिमानाध्यवसाया युगपदेव प्रादुर्भवंति ॥ यतस्तत उत्प्लुत्य तत्स्था-
नादेकपदेऽपसरति क्रमशस्तु यदा मंदालोके प्रथमं तावद्वस्तुमात्रं संमुग्धमालोचयति अथ प्रणिहितमनाः कर्णान्ताकृष्टसशर-
संज्ञितज्यामंडलीकृतकोदंडः प्रचंडतरः पाटच्चरोऽयमिति निश्चिनोति अथ च मां प्रत्येतीत्यभिमन्यते अथाध्यवस्यत्यपसरामीतः
स्थानादिति परोक्षे तु त्रयस्य वाह्येंद्रियवर्ज्जं वृत्तिरित्याह अदृष्टे त्रयस्य तत्पूर्विका वृत्तिः अंतःकरणत्रयस्य युगपत्क्रमेण वा व-
त्तिकेति अनुमानागमस्मृतयो हि परोक्षेऽर्थे दर्शनपूर्वाः प्रवर्त्तन्ते नान्यथा यथा दृष्टे तथाऽदृष्टेऽपीति योजना ॥२९॥ स्यादेतच्चतुर्ण्णं
त्रयाणां वा वृत्तयो न तावत्स्वमात्राधीनास्तेषां सदातनत्वेन सदोत्पादप्रसंगात् आकस्मिकत्वे तु वृत्तिसंकरप्रसंगो नियमहेतोरभा-
वादित्यत आह ॥ स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिं पुरुषार्थ एव हेतुर्न केनचित्कार्य्यते करणम् ॥३०॥ करणानीति
शेषः यथा हि बहवः पुरुषाः शाक्तीकयाष्टीकधानुष्ककार्पाणिकाः कृतसंकेताः पुरावस्कंदाय प्रवृत्तास्तत्रान्यतमस्य करण-
स्याकूतमवगम्यान्यतम प्रवर्त्तते प्रवर्त्तमानश्च शाक्तीकः शक्तिमेवादत्ते न यष्ट्यादिकमेवं याष्टीकोऽपि यष्टिमेव न धानुष्कादिकम्
तथान्यतमस्याकूतात्स्वस्वकार्य्यकरणाभिमुखादन्यतमं करणं प्रवर्त्तते तत्प्रवृत्तेश्च हेतुमत्त्वान्न वृत्तिसंकर इत्युक्तं स्वां स्वां प्रति-
पद्यंत इति स्यादेतद्याष्टीकादयश्चेतनत्वात्परस्पराकूतमवगम्य प्रवर्त्तन्त इति युक्तम् करणानि त्वचेतनानि तस्मान्नैवं प्र-
वर्त्तितुमुत्सहंते तेनैषामधिष्ठात्रा करणानां स्वरूपसामर्थ्योपयोगाभिज्ञेन भवितव्यमत आह पुरुषार्थ एव हेतुर्न केनचित्कार्य्यते
करणं भोगापवर्गलक्षणः पुरुषार्थ एवानागतावस्थः प्रवर्त्तयति करणानि कृतमत्र तत्स्वरूपाद्यभिज्ञेन कर्त्रा एतच्च वत्सवि-
वृद्धिनिमित्तमित्यत्रोपपादयिष्यते ३० न केनचित्कार्य्यते करणमित्युक्तम् ॥ तत्र करणं विभजते करणं त्रयोदशविधं तदाह-
रणधारणप्रकाशकरम् कार्यं च तस्य दशधाहार्य्यं धार्य्यं प्रकाश्यं च ३१ ॥ करणं त्रयोदशविधमिन्द्रियाण्येकादश बुद्धिरहंका-
रश्चेति त्रयोदशप्रकारं करणं कारकविशेषः करणं च व्यापारविशेषं विना कारणत्वमिति व्यापारमाह तदेति यथायथं तत्रक

मनोलक्षयति स्यादेतदसाधारणव्यापारयोगिभ्यो यथा महदहंकाराभ्यां नेन्द्रियं मनोऽप्यसाधारणव्यापारयोगि नेन्द्रियं भवितु
मर्हतीत्यत आह इन्द्रियं च कुतः साधर्म्यात् इन्द्रियान्तरैः सात्विकाहंकारोपादानत्वं च साधर्म्यं न त्विन्द्रलिंगत्वं महदादीनाम
प्यात्मलिंगत्वेनेन्द्रियत्वप्रसंगात् तस्माद्व्युत्पत्तिनिमित्तमात्रमिन्द्रलिंगत्वं न तु प्रवृत्तिनिमित्तम् अथ कथं सात्विकादहंका
राद् एकादशेन्द्रियाणीत्यत आह गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च शब्दाद्युपभोगसमर्थप्रवर्त्तकादृष्टसहकारि
भेदात्कार्यभेदः अदृष्टभेदोऽपि गुणपरिणाम एव बाह्यभेदाश्चेति दृष्टान्तार्थम् ॥ यथा बाह्यभेदास्तथैव तदपीत्यर्थः २६ ॥ तदेव
मेकादशेन्द्रियाणि स्वरूपत उक्त्वा दशानामसाधारणीं वृत्तिमाह ॥ शब्दादिषु पंचानामालोचनमात्रमिष्यते वृत्तिः ॥ वचनादान
विहरणोत्सर्गानन्दाश्च पंचानाम् ॥ २७ ॥ बुद्धीन्द्रियाणां संमुग्धवस्तुदर्शनं चालोचनमुक्तम् कर्मेन्द्रियाणां कण्ठताल्वादिस्थानमि
न्द्रियं वाक् तस्या वृत्तिर्वचनं स्पष्टमन्यत् २७ ॥ अन्तःकरणत्रयस्य वृत्तिमाह ॥ स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या साम
न्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २८ स्वालक्षण्यं स्वमसाधारणं लक्षणं येषां तानि स्वलक्षणानि महदहंकारमनांसि तेषां भा
वः स्वालक्षण्यं तच्च स्वात्मलक्षणमेव तद्यथा महतोऽध्यवसायोऽहंकारस्याभिमानः संकल्पो मनसो वृत्तिर्व्यापारः वृत्तिद्वैविध्यं
साधारणत्वासाधारणत्वाभ्यामाह ॥ सैषा भवत्यसामान्या साधारणी सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च सामान्या
चासौ करणवृत्तिश्चेति त्रयाणामपि करणानां पञ्च वायवो जीवनं वृत्तिः तद्भावे भावात् तदभावे चाभावात् तत्र प्राणो नासाग्र
हृन्नाभिपादांगुष्ठवृत्तिः अपानः कृकाटिकापृष्ठपायूपस्थपार्श्ववृत्तिः समानो हृन्नाभिसर्वसंधिवृत्तिः उदानो हृत्कण्ठतालुमूर्द्धभ्रू
मध्यवृत्तिः व्यानस्त्वग्वृत्तिरिति पंचवायवः २८ ॥ अस्या साधारणीषु वृत्तिषु क्रमाक्रमप्रकारावाह ॥ युगपच्चतुष्टयस्य तु वृत्तिः
क्रमशश्च तस्य निर्दिष्टा दृष्टे तथाप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ २९ ॥ दृष्टे यथा सतमस्यंधकारे विद्युत्संपातमात्राद्व्य

त्वां विषयं विवेचयति । बुद्धीन्द्रियाणि तेषां पंचविशेषाविशेषविषयाणि । वागभवति शब्दविषया शेषाणि तु पंचविषयाणि ॥
३४ ॥ बुद्धीन्द्रियाणि तेषां दशानामिन्द्रियाणां मध्ये पंच विशेषाविशेषविषयाणि । विशेषाः स्थूलाः शब्दादयः शान्तघोरमूढाः
पृथिव्यादिरूपाः अविशेषास्तन्मात्राणि सूक्ष्माः शब्दादयः तन्मात्रग्रहणेन स्थूलभूतभावमपाकरोतीति विशेषाश्चाविशेषाश्च
विशेषाविशेषास्त एव विषया येषां बुद्धीन्द्रियाणां तानि तथोक्तानि तत्रोर्द्ध्वस्रोतसां योगिनां च श्रोत्रं शब्दतन्मात्रविषयं स्थूल

२७

शब्दविषयं च अस्मदादीनां तु स्थूलशब्दविषयमेव । एवं त्वक् स्थूलसूक्ष्मस्पर्शविषया अस्मदादीनां स्थूलस्पर्शवि
षयैव एवं चक्षुरादयोऽपि तेषामस्मदादीनां च रूपादिषु स्थूलसूक्ष्मेषु द्रष्टव्याः । एवं कर्मेन्द्रियेषु वागभवति शब्दविषया स्थू
लशब्दविषया तद्धेतुत्वात् । न तु शब्दतन्मात्रस्य हेतुस्तस्याहंकारहेतुकत्वेन वागिन्द्रियेण सहैककारणत्वात् । शेषाणि तु

प

चत्वारि पायूपस्थपाणिपादाख्यानि पञ्चविषयाणि पाण्यादिग्राह्याणां घटादीनां पञ्चशब्दाद्यात्मकत्वादिति ३४ ॥ सांप्र
तं त्रयोदशसु करणेषु केषांचित्प्रधानभावं केषांचिदप्रधानभावं सहेतुकमाह । सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मा
त् तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि ३५ द्वारि प्रधानं शेषाणि करणानि बाह्येन्द्रियाणि द्वाराणि ते रूपनीतं वि

म

षयं सैनाहंकारा बुद्धिर्यस्मादवगाहते अध्यवस्यति तस्माद्बाह्येन्द्रियाणि द्वाराणि द्वारवती च सान्तःकरणा बुद्धिरिति ३५ न केवलं बाह्येन्द्रियाण्यपे
क्ष्य प्रधानं बुद्धिरपि तु येऽप्यहंकारमनसी द्वारिणी ते अपेक्ष्य बुद्धिः प्रधानमित्याह ॥ एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ॥ कृत्स्नं
पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ यथाहि ग्रामाध्यक्षाः कुटुम्बिकेभ्यः करमादाय विषयाध्यक्षाय प्रयच्छन्ति विषयाध्यक्षश्च
सर्वाध्यक्षाय स च भूपतये तथा बाह्येन्द्रियाण्यालोच्य मनसे समर्पयन्ति मनश्च संकल्प्याहंकाराय अहंकारश्चाभिमत्य बुद्धौ
सर्वाध्यक्षभूतायै । तदिदमुक्तम् पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्तीति । बाह्येन्द्रियमनोऽहंकाराश्च गुणविशेषाः गुणानां सत्त्व
रजस्तमसां विकारास्ते तु परस्पर [illegible] तानीताः यथा वर्त्ति तैलवह्नयः

र्मेन्द्रियाणि वागादीन्याहरंति यथास्वमुपाददते स्वव्यापारेण व्याप्नुवंतीति यावत् बुध्यहंकारमनांसि तु स्ववृत्त्या प्राणादि
लक्षणया धारयंति बुद्धीन्द्रियाणि प्रकाशयंति आहरणधारणादिक्रियाणां सकर्मकतया किं कर्म कतिविधं चेत्यत आह कार्यं
च तस्य त्रयोदशविधस्य दशधाहार्यं धार्यं प्रकाश्यं चाहार्यं व्याप्यं कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानंदाः ते
यथायथं दिव्यादिव्यतया दशेत्याहार्यं दशधा एवं धार्यमपि अन्तःकरणत्रयस्य प्राणादिलक्षणया वृत्त्या शरीरं तच्च पा
र्थिवादिपांचभौतिकं पृथिव्यादीनां पंचानां समूहः तेपंच दिव्यादिव्यतया दशेति धार्यमपि दशधा एवं बुद्धीन्द्रियाणां शब्द
स्पर्शरूपरसगंधाः यथायथं व्याप्याः ते च यथायथं दिव्यादिव्यतया दशेति प्रकाश्यमपि दशधेति ३१ त्रयोदशविधकरणे
वान्तरविभागं करोति ॥ अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यं सांप्रतिकालं बाह्यं त्रिकालमाभ्यंतरं करणम् ३३
अन्तःकरणं त्रिविधं बुद्धिरहंकारो मन इति शरीराभ्यंतरवर्त्तित्वादन्तःकरणं दशधा बाह्यमिन्द्रियम् ॥ त्रयस्यान्तःकरण
स्य विषयाख्यं विषयाख्यं विषयमाख्यातीति विषयाख्यं संकल्पाभिमानाध्यवसायेषु कर्त्तव्येषु द्वारीभवति तत्र बुद्धीन्द्रिया
ण्यालोचनेन कर्मेन्द्रियाणि तु यथास्वं व्यापारेण बाह्यान्तरयोः करणयोर्विशेषान्तरमाह सांप्रतिकालं बाह्यं त्रिकालमाभ्यं
तरं करणम् सांप्रतिकालं बाह्यमिन्द्रियम् वर्त्तमानसमीपमनागतमपि वर्त्तमानमतो वागपि वर्त्तमानकालविषया भवति॰
त्रिकालमाभ्यन्तरं करणम् तद्यथा नदीपूरभेदादभूद्वृष्टिरस्ति धूमादग्निरिह नगनिकुंजे असत्युपघाते पिपीलकांड
संचरणाद्भविष्यति वृष्टिरिति तदनुरूपाश्च संकल्पाभिमानाध्यवसाया भवंति कालश्च वैशेषिकाद्यभिमत एको नानागता
दिव्यवहारभेदं प्रवर्त्तयितुमर्हतीति तस्मादयं येरुपाधिभेदैरनागतादिभेदं प्रतिपद्यते संतु त एवोपाधयो नागतादिव्यवहारहे
तवः कृतमत्रान्तर्गडुना कालेनेति सांख्याचार्याः तस्मान्न कालरूपतत्त्वान्तराभ्युपगम इति ३२ सांप्रतिकालानां बाह्येन्द्रिया

78

वत्निरूपाणि पंचपंचभ्यस्तन्मात्रेभ्यः ... स्थूलत्वेषां भूतानामुत्पत्तिर्विशेषेषु किमायातमित्यत्र आह एते स्मृता विशेषाः
कुतः शान्ता घोराश्च मूढाश्च चैको हेतौ द्वितीयः समुच्चये यस्मादाकाशादिस्थूलेषु सत्वप्रधानतया केचिच्छान्ताः सु
खाः प्रकाशा काल लघवः केचिद्रजः प्रधानतया घोराः दुःखा अनवस्थिताः केचित्तमः प्रधानतया मूढा विषण्णा गुर
वः ते भी परस्परं व्यावृत्ता अनुभूयमानाः विशेषाः स्थूला इति चोच्यंते तन्मात्राणि तस्मदादिभिरन्योन्यव्या
त्तानि नानुभूयंते इत्यविशेषाः सूक्ष्मा उच्यंते इति ३७ विशेषाणामवांतरविशेषमाह॥ सूक्ष्मा मातापितृजाः सह
प्रभूतैस्त्रिधा विशेषाः स्युः सूक्ष्मास्तेषां नियता मातापितृजा निवर्त्तन्ते॥ ३८॥ त्रिविधा विशेषाः स्युस्तान् विशे
षानाह सूक्ष्माः सूक्ष्मदेहाः मातापितृजाश्च षाट्कौषिकास्तत्र मातृतो लोमलोहितमांसानि पितृतः स्नाय्वस्थिम
ज्जान इति षट्कोशाः प्रभूतानि महांति भूतानि तैः सह सूक्ष्मशरीरमेको विशेषः मातापितृजो द्वितीयश्च महाभूतानि
तृतीयः महाभूतवर्गेण घटपटादीनां निवेशः इति सूक्ष्ममातापितृजयोर्देहयोर्विशेषमाह सूक्ष्मास्तेषां विशे
षाणां मध्ये ये ते नियताः मातापितृजा निवर्त्तन्ते रसांता वा भस्मान्ता वा विड्ांता वेति ३८॥ सूक्ष्मशरीरं विभजते
पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम्। संसरति निरुपभोगं भावैरधिवासितं लिंगम्॥ ३९॥ पूर्वोत्पन्नम्
प्रधानेनादिसर्गे प्रतिपुरुषमेकैकमुत्पादितम्। असक्तं अव्याहतं शिलामप्यनुप्रविशतीति नियतं महदादिसर्गादे
च महाप्रलयादवतिष्ठते महदादिसूक्ष्मपर्यन्तम् महदहंकारैकादशेंद्रियपंचतन्मात्रपर्यन्तम् एतेषां समुदायः सूक्ष्म
शरीरम्। शान्तैः घोरैः मूढैरिंद्रियैरन्वितत्वाद्विशेषः ननु स्वेतद्देवशरीरं भोगायतनं पुरुषस्य कर्तुः इत्यमाचे न
... कोपि ... नशरीरेण ... संसरतीति ... कोशिकं शरीरं जहाति ... चोपादत्ते॥ कस्माच्चि

संतमसमापन्नयनेन रूपप्रकाशनमभिलिता प्रदीप एवमेते गुणविशेषा इति योजना ३५॥ कस्मात्पुनर्बुद्धौ प्रयच्छन्ति
ननु बुद्धिरहंकारादयः करणानि मनसेवेत्यत आह॥ सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः। सैव च विशिनष्टि पु
नः प्रधानपुरुषान्तरं सूक्ष्मम्॥३६॥ पुरुषार्थस्य प्रयोजनत्वात्तस्य यत्साक्षात्साधनं तत्प्रधानं बुद्धिश्चास्य साक्षात्सा
धनं तस्मात्सैव प्रधानं यथा सर्वाध्यक्षः साक्षाद्राजार्थसाधनतया प्रधानमितरे तु ग्रामाध्यक्षादयः तत्प्रतिगुणभूताः
बुद्धिः पुरुषस्य सन्निधानात् तच्छायापत्त्या तद्रूपेव सर्वं विषयभोगं साधयति सुखदुःखानुभवो भोगः स च बुद्धौ बुद्धि
श्च पुरुषस्वरूपेवेति पुरुषमुपभोजयति अर्थालोचनसंकल्पाभिमानाश्च तत्तद्रूपपरिणामेन बुद्धावुपक्रान्ता इती
न्द्रियादिव्यापाराः प्रतिबुद्धेरेव स्वव्यापारेणाध्यवसायेन सहैकव्यापारीभवन्ति यथा स्वसैन्येन सह ग्रामाध्यक्षादि
सैन्यं सर्वाध्यक्षस्य भवति सर्वं शब्दादिकं प्रति यदुपभोगः पुरुषस्य तं साधयति ननु पुरुषस्य सर्वविषयोपभोगं संपादि
का यदि बुद्धिस्तर्हि निर्मोक्षप्रसंग इत्यत आह॥ पश्चात्प्रधानपुरुषयोरन्तरं विशेषं विशिनष्टि करोति यथौदनपाके
पचतीति ननु प्रधानपुरुषयोरन्तरस्य कृतकत्वादनित्यत्वं तत्कृतं मोक्षस्यापीत्यत आह। विशिनष्टि प्रधानेन सविका
रमनादि ह प्रधानविद्यमानमेवान्तरमविवेकेनाविद्यमानमिव बुद्धिर्बोधयतीति ननु तत्करोतीत्यर्थः करणं च
प्रतिपादने अनेनापवर्गः पुरुषार्थो बुद्धेर्दर्शितः सूक्ष्ममिति दुर्लक्ष्यमन्तरं ३६॥ तदेवं करणानि विभज्य विषयान्वि
भजते॥ तन्मात्राण्यविशेषास्तेभ्यो भूतानि पंच पंचभ्यः एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ३७ तन्मात्रा
ण्यविशेषाः शब्दादितन्मात्राणि सूक्ष्माणि न त्वेषां शान्तादिरस्त्युपभोगयोग्यो विशेष इति मात्रशब्दार्थः अविशेषानुक्त्वा
विशेषान्वक्तुमेषामुत्पत्तिमाह तेभ्यस्तन्मात्रेभ्यो यथासंख्यमेकद्वित्रिचतुःपञ्चभ्यो भूतान्याकाशानिलानलसलिला

सा॰कौ

१९

तथा च पुराणे वैश्वरूप्यात्प्रधानस्य परिणामो ऽयमद्भुतः ॥४१॥ निमित्तनैमित्तिकप्रसंगेन तु क्रमः तत्र निमित्तनैमित्ति
के विभजते ॥ सांसिद्धिकाश्च भावाः प्राकृतिका वैकृतिकाश्च धर्म्माद्याः दृष्टाः करणाश्रयिणः कार्य्याश्रयिणश्च कल
लाद्याः ॥४२॥ प्राकृतिकाः निमित्तानि धर्म्मादयः स्वाभाविकाः तथाहि सर्गादावादिविद्वान् तत्र भगवान् कपिलो महा
मुनिः धर्म्मज्ञानवैराग्यैश्वर्य्यसंपन्नः प्रादुर्बभूवेति स्मरंति । वैकृतिकाः प्रसांसिद्धिका उपायानुष्ठानेनोत्पन्नाः यथा प्राचेतसप्रभृती

19

नां परममहर्षीणां एवमधर्म्माज्ञानावैराग्यानैश्वर्य्याण्यपि कार्य्यं शरीरं तदाश्रयिणः प्रस्थावस्थाः कलिलबुद्बुदमांसपेशीकंडरांग
प्रत्यंगव्यूहाः गर्भस्थस्य ततो निर्गतस्य बालकौमारयौवनवार्धकानीति ॥४३॥ अवगतानि निमित्तनैमित्तिकानि कतमस्य तु निमित्त

तिकामि ७

स्य कतमन्नैमित्तिकमित्यत आह धर्म्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्म्मेण ज्ञानेन चापवर्गो विपर्ययादिष्यते बंधः ॥४४॥ धर्म्मेण गमन
मूर्ध्वं द्युप्रभृतिषु लोकेषु गमनमधस्ताद्भवत्यधर्म्मेण सुतलादिषु ज्ञानेन चापवर्गस्तावदेव प्रकृतिर्भोगमारभते न यावद्विवेकख्यातिं
करोति अथ सा विवेकख्यातौ सत्यां कृतकृत्यतया विवेकख्यातिमंतं पुरुषं प्रति निवर्त्तते यथाहुः विवेकख्यातिपर्य्यंतमज्ञा
नाद्धि तच्चेष्टितमिति विपर्य्ययादतत्त्वज्ञानादिष्यते बंधः स च त्रिधा प्राकृतिको वैकृतिको दाक्षिणश्चेति तत्र प्रकृता
वात्मज्ञानाद्ये प्रकृतिमुपासते तेषां प्राकृतिको बंधः यत्पुराणे प्रकृतिलयानत्युच्यते पूर्णं शतसहस्रं हि तिष्ठंत्यव्यक्तचिं
तका इति वैकारिको बंधस्तेषां ये विकारानेव भूतेन्द्रियाहंकारबुद्धीः पुरुषबुद्ध्योपासते तान्प्रतीदमुच्यते दश मन्वंत
राणीह तिष्ठंतीन्द्रियचिंतकाः भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः बौद्धा दशसहस्राणि तिष्ठंति विगतज्वराः पु
रूपं निर्गुणं प्राप्य कालसंख्या न विद्यते वैवल्लमो विदेहा ये षां वैकृतिको बंधः इष्टापूर्त्तेन दाक्षिणः पुरुषतत्त्वानभि
ज्ञो हि इष्टापूर्त्तकारी कामोपहतमना बध्यत इति ॥४५॥ वैराग्यात्प्रकृतिलयः संसारो भवति राजसाद्रागात् ऐश्वर्य्यादविघातो वि

रूपभोगं यतः षाट्कौशिकं शरीरं विना सूक्ष्मशरीरं निरुपभोगं तस्मात्सूक्ष्मंशरीरं संसरति ननु धर्माधर्मनिमित्तः
संसारो न च सूक्ष्मस्य शरीरस्यास्ति तद्योगस्तत्कथं संसरतीत्यत आह भावैरधिवासितं लिंगम् धर्माधर्मज्ञानाज्ञा
नवैराग्यावैराग्यैश्वर्यानैश्वर्याणि भावास्तदन्विता बुद्धिस्तदन्वितं सूक्ष्मशरीरमिति तदपि भावैरधिवासितं यथा
सुरभिचंपककादिसंपर्कात्तदामोदवासितं भवति तस्माद्भावैरधिवासितत्वात्संसरति॥ कस्मात्पुनः प्रधानमिव महाप्र
लयेऽपि तच्छरीरं न तिष्ठतीत्यत आह· लिंगं लयं गच्छतीति लिंगं हेतुमत्वेनास्य लिंगत्वमिति भावः ३९ ॥ स्यादेतद्बुद्धिरेव
माहंकारेंद्रिया कस्मान्न संसरंतु कृतं सूक्ष्मशरीरेणाप्रामाणिकेनेत्यत आह॥ चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना य
था छाया तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिंगम्॥ ४० लिंगमापनहेतुत्वात् यो लिंगं तदनाश्रयेन तिष्ठति· जन्म
मरणान्तराले बुद्ध्यादयः प्रत्युत्पन्नशरीराश्रयाः प्रत्युत्पन्नपंचतन्मात्रवत्त्वे सति बुद्ध्यादित्वात् दृश्यमानशरीरवद्वि
बुद्ध्यादिवत् विना विशेषैरिति सूक्ष्मैः शरीरैरित्यर्थः आगमश्चात्र भवति अंगुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यम इति·
अंगुष्ठमात्रत्वेन सूक्ष्मशरीरत्वमुपलक्षयति आत्मनो निष्कर्षासंभवेन सूक्ष्ममेव शरीरं पुरुषस्तदपि हि पुरि स्थूलशरीरे शे
त इति ४० एवं सूक्ष्मशरीरास्तित्वमुपपाद्य यथा संसरति येन हेतुना च तदुभयमाह पुरुषार्थहेतुकमिदं निमित्तनैमि
त्तिकप्रसंगेन प्रभोर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिंगम्॥ ४१ ॥ पुरुषार्थेन हेतुना प्रयुक्तं निमित्तं धर्माधर्मादि नै
मित्तिकं तेषु तेषु निकायेषु षाट्कौशिकशरीरपरिग्रहः सहि धर्मादिनिमित्तप्रभवः निमित्तनैमित्तिकं च तयोः प्रसक्तिस्तया
नटवद्व्यवतिष्ठते लिंगं सूक्ष्मशरीरं यथा हि नटस्तां तां भूमिकां विधाय रामो वा जामदग्न्यो वा वत्सराजो वा भवत्येवं तत्तत्स्थूलशरीरग्रह
णादेवो मनुष्यो वा पशुर्वा वनस्पतिर्वा सूक्ष्मशरीरमित्यर्थः कुतः पुनरस्येदृशो महिमेत्यत आह प्रभोर्विभुत्वयोगात्

लं६

२व

श२

अणिमादिकमासाद्य शाश्वतिकमभिमन्यंत इति सेयमस्मितामोहोऽष्टविधैश्वर्यविषयत्वादष्टविधः दशविधो महामोहः श
ब्दादिषु पंचसु दिव्यादिव्यतया दशसु विषयेषु रंजनीयेष्वनुराग आसक्तिर्महामोहः सच दशविधविषयत्वाद्दशविधः
तामिस्रोऽष्टादशधा शब्दादयो दश विषया रंजनीयाः स्वरूपतः ऐश्वर्यमणिमाद्यष्टकं न स्वरूपतो रंजनीयं किन्तु रंज
नीयशब्दाद्युपायः ते च शब्दादयः उपस्थिताः परस्परोपहन्यमानास्तदुपायाश्चाणिमादयः स्वरूपेणैव कोपनीया भ
वंतीति शब्दादिभिर्दशभिः सहाणिमाद्यष्टकमष्टादशधेति तद्विषयो द्वेषस्तामिस्रोऽष्टादशविषयत्वादष्टादशधेति।।
तथांधतामिस्र इति अभिनिवेशस्तापोऽन्धतामिस्रस्तथेत्यनेनाष्टादशधेत्यनुषज्यते देवाः खल्वणिमादिकमष्टवि
धमैश्वर्यमासाद्य दश शब्दादीन्भुंजानाः शब्दादयो भोग्यास्तदुपायाश्चाणिमादयोऽस्माकमसुरादिभिर्मोपघातयिष्यंतेति
बिभ्यति तदिदं भयमभिनिवेशोऽन्धतामिस्रोऽष्टादशविषयत्वादष्टादशधेति सोऽयं पंचविपर्ययोऽवांतरभेदाद्द्वाषष्टिरि
ति [illegible] तदेवं पञ्चविधविपर्ययभेदानुक्त्वाऽष्टाविंशतिभेदामशक्तिमाह एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरु
द्दिष्टा सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम्।।४८।। एकादशेन्द्रियवधाः बाधिर्यं कुष्ठितान्धत्वं जडताऽजिघ्रता त
थामूकता कौण्यपंगुत्वं क्लैब्योदावर्तमत्तता यथासंख्यं श्रोत्रादीनामिन्द्रियाणां वधाः एतान्येव तत्तद्धेतुका बुद्धेरशक्ति
स्वव्यापारे भवति तथा चैकादशहेतुकत्वादेकादशधा बुद्धेरशक्तिरित्युच्यते हेतुहेतुमतोरभेदविवक्षया च सामानाधिक
रण्यम् तदेवमिन्द्रियवधद्वारेण बुद्धेरशक्तिमुक्त्वा स्वरूपतोऽशक्तीराह सह बुद्धिवधैरिति कति बुद्धेः स्वरूपतो वधा इ
त्यत आह सप्तदश वधा बुद्धेरिति कुतः विपर्ययात्तुष्टिसिद्धीनामिति तुष्टयो नवधेति तद्विपर्ययास्तन्निरूपणा
न्नवधा भवंति एवं सिद्धयोऽष्टाविति तद्विपर्ययास्तन्निरूपणादष्टौ भवंति ४८ तुष्टिर्नवधेत्युक्तं ताः परिगणयति
आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः बाह्या विषयोपरमाच्च पंच नव तुष्टयोऽभिमताः ४९ प्रकृतिव

पर्य्ययात्तद्विपर्य्यासः ४४ वैराग्यात्प्रकृतिलयः पुरुषतत्त्वानभिज्ञस्य वैराग्यमात्रात्प्रकृतिलयः प्रकृतिग्रहणेन प्रकृतिम
हदहंकारभूतेन्द्रियाणि गृह्यंते तेष्वात्मबुद्ध्योपास्यमानेषु लयः कालांतरेण च पुनराविर्भवतीति संसारो भवति राजसा
द्रागात् राजसाद्रागेन रजसो दुःखत्वात्संसारस्य दुःखितास्तु चिता ऐश्वर्य्यादविघातः इति अविघातइतीच्छायाः ईश्वरो
हि यदेवेच्छति तदेव करोति विपर्य्ययात् ऐश्वर्य्यात्तद्विपर्य्यासः सर्वत्रेच्छाविघातइत्यर्थः ४४ बुद्धिधर्म्मान्धर्म्मादीनष्टौभावा
न्समासव्यासाभ्यां मुमुक्षूणां हेयोपादेयभावेन दर्शयितुं प्रथमं तस्तावत्समासमाह एष प्रत्ययसर्गो विपर्य्ययाशक्तितुष्टि
सिद्ध्याख्यः गुणवैषम्यविमर्दात्तस्य च भेदास्तु पंचाशत् ४५ प्रतीयतेनेनेति प्रत्ययो बुद्धिस्तस्याः सर्गः तत्र विपर्य्ययोऽज्ञानमविद्या
साबुद्धिधर्म्मः अशक्तिरपिकरणवैकल्यहेतुका बुद्धिधर्म्म एव तुष्टिसिद्धी अपि वक्ष्यमाणे बुद्धिधर्म्मावेव तत्र विपर्य्ययाशक्तितुष्टि
षु यथा योगं धर्म्मादीनां ज्ञानवर्जमंतर्भावः सिद्धौ च ज्ञानस्येति आसमाह तस्य च भेदास्तु पंचाशदिति कस्माद्गुणवैषम्यवि
मर्दात् गुणानां वैषम्येनैकस्याधिकबलत्वात् द्वयोर्द्वयोर्वा एकैकस्य न्यूनबलताद्वयोर्द्वयोर्वा तच्च न्यूनाधिकभावेन मर्दः न्यूनाधिकमा
वतया यथाकार्य्यमुन्नीयते तदिदं गुणानां वैषम्यं तेनोपमर्द एकैकस्य न्यूनस्य द्वयोर्वाभिभवस्तस्मात्तस्य भेदाः पंचाशत् ॥
४५ तानेव पंचाशद्भेदानुगणयति ॥ पंचविपर्य्ययभेदाभवंत्यशक्तिश्चकरणवैकल्यात् अष्टाविंशतिभेदा तुष्टिर्नवधा
ष्टधा सिद्धिः ४६ अविद्यास्मितारागद्वेषाभिनिवेशाः यथासंख्यं तमोमोहमहामोहतामिस्रांधतामिस्रसंज्ञाः पंचविपर्य्य
यस्य विशेषाः विपर्य्ययप्रभवानामप्यस्मितादीनां विपर्य्ययस्वभावत्वात् यद्वा यदविद्यया विपर्य्ययेणावधार्यते वस्तु अस्मि
तादयस्तु तत्स्वभावाः संतस्तदभिनिविशंते अतएव पंचपर्वा अविद्येत्याह वार्षगण्यः ४६ संप्रति पंचानां विपर्य्ययभेदानामवां
तरभेदानाह ॥ भेदस्तमसोष्टविधो मोहस्य च दशविधो महामोहः ॥ तामिस्रोष्टादशधा तथा भवत्यंधतामिस्रः ॥ ४७ ॥
भेदस्तमसो विद्याया अष्टविधः अष्टास्वव्यक्तमहदहंकारपंचतन्मात्रेष्वनात्मस्वात्मबुद्धिरविद्यातमः तमसोष्टविधत्व
त्वादष्टविधत्वं मोहस्य चाप्यष्टविधो भेदः शतचक्रे लानुपश्यंते [illegible] अष्टविधमैश्वर्य्यमासाद्यामृताभिमानिन

२१

रक्षितमपि धनं कालेन क्षीयत्ते इति भावयतो या तुष्टिः सा तृतीया तिपारमुच्यते तथा महतायासेनार्जितं धनं भुज्यमानं क्षीय
त इति तत्क्षयं भावयतो विषयोपरमे या तुष्टिः ॥ सा पि तृतीया पारापारमुच्यते एवं शब्दादिभोगाभ्यासाद्वर्द्धन्ते कामास्तेन
विषयाप्राप्तौ कामिनं दुःखयंतीति भोगदोषं भावयतो विषयोपरमो या तुष्टिः सा चतुर्थी अनुत्तमांभ उच्यते एवं
नानुपहत्य भूतानि विषयोपभोगाः संभवंतीति हिंसादोषदर्शनाद्विषयोपरमे या तुष्टिः सा पंचमी उत्तमांभ उच्य
ते तदेवमाध्यात्मिकाभिश्चतसृभिर्बाह्याभिः पंचभिर्नव तुष्टयो भिमताः ॥४९॥ गौणमुख्यभेदभिन्नाः सिद्धी
राह ॥ ऊहः शब्दोध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः दानं च सिद्धयोष्टौ सिद्धेः पूर्वोंकुशस्त्रिविधः ॥५०॥ विहन्य
मानस्य दुःखस्य त्रित्वात्तद्विघातास्त्रय इति इमा मुख्यास्तिस्रः सिद्धयः दुःखविघातोपायतया चेतराः पंच गौ
ण्यः सिद्धयः ताश्चापि हेतुहेतुमत्तया व्यवस्थिताः तत्राध्ययनलक्षणा सिद्धिर्हेतुरेव मुख्यास्तु सिद्धयो हेतुमत्य एव
मध्यमास्तु हेतुहेतुमत्यः विधिवद्गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणमध्ययनं प्रथमा सिद्धिस्तारमुच्यते
तत्कार्यं शब्दः इति शब्दजन्यमर्थज्ञानमुपलक्षयति कार्यो कारणोपचारात् सा द्वितीया सिद्धिः सुतारमुच्यते तदिदं द्वि
धा श्रवणं ॥ ऊहस्तर्क आगमाविरोधिना न्यायेनागमार्थपरीक्षणम् संशयपूर्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थाप
नं तदिदं मननमाख्यायते आगमिभिः सा तृतीया सिद्धिस्तारतारमुच्यते सुहृत्प्राप्तिः न्यायेन हि स्वयं परीक्षित
मप्यर्थं न श्रद्धत्ते न यावद्गुरुशिष्यसब्रह्मचारिभिः सह संवाद्यते अतः सुहृदां गुरुशिष्यसब्रह्मचारिणां संवाद
कानां प्राप्तिः सुहृत्प्राप्तिः सा सिद्धिश्चतुर्थी रम्यकमुच्यते दानं च शुद्धिर्विवेकज्ञानस्य दैप् शोधने इत्यस्माद्धातोर्दानपद
व्युत्पत्तेः यथाह भगवान्पतंजलिः विवेकख्यातिरविप्लवा हानोपायः इति अविप्लवः शुद्धिः सा च सवासनसंश

21



२

तिरिक्त आत्मास्तीति यस्य श्रवणमननेन तु: विवेकसाक्षात्काराय तत्सदुपदेशात्तुष्टो यो न प्रयतते तस्य चतस्र आध्यात्मिकास्तु
ष्टयो भवंति प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य यस्मात्तास्तुष्टयस्तस्मादाध्यात्मिकाः काः ताः इत्यत आह प्रकृत्युपादान
कालभाग्याख्या इति प्रकृत्यादिराख्या यासां तास्तथोक्ता इति तत्र प्रकृत्याख्यां तुष्टिं यथा कस्यचिदुपदेशो विवेकसाक्षा
त्कारो हि प्रकृतेः परिणामभेदः तं च प्रकृतिरेव करोतीति कृतमनेन ध्यानाभ्यासेन तस्मादेवमेवास्तु वत्सेति प्रतिपन्नस्य
शिष्यस्य प्रकृत्याख्या तुष्टिः सा प्रकृत्याख्या तुष्टिरम्भ उच्यते या तु प्राकृतिक्यपि विवेकख्यातिर्न प्रकृतिमात्राद्भवति मा भू
त्सर्वस्य सर्वदा तन्मात्रस्य सर्वस्य विशिष्टत्वात् प्रव्रज्यायास्तु सा भवति तस्मात्प्रव्रज्यामुपाददीथाः कृतं ते ध्यानाभ्यासेना
युष्मन्निति उपदेशे तुष्टिः सोपादानाख्या सलिलमुच्यते या तु प्रव्रज्यापि सद्यो न निर्वाणदेति सैव कालपरिणाममपेक्ष्य सि
द्धिं विधास्यत्यलमुत्तमस्य ध्यानवेत्युपदेशे तुष्टिः सा कालाख्या ओघ इत्युच्यते या तु न कालान्नाप्युपादानाद्विवेकख्यातिरपि
तु भाग्यादेवात एव मदालसापत्यानि बालान्यपि मातुरुपदेशमात्रादेव विवेकख्यातिमंति मुक्तानि बभूवुस्तस्माद्भाग्यमेव हेतु
र्नान्यदित्युपदेशे तुष्टिः सा भाग्याख्या तुष्टिर्वृष्टिरुच्यते बाह्याः पंचेति बाह्यास्तु तुष्टयो विषयोपरमाश्च मा त्व
त्वेनात्मनः प्रकृतिमहदहंकारादीनात्मत्वेनाभिमन्यमानस्य वैराग्ये सति तुष्टयस्ता बाह्याः आत्मज्ञानाभावे ना
त्मानमधिकृत्य प्रवर्तंत इति नाश्च वैराग्यमति संभवतीत्यत इति वैराग्यहेतुपंचत्वात् वैराग्याणि पंच च तत्पंचत्वात्तु
ष्टयः पंचेति उपरम्यतेनेनेत्युपरमो वैराग्यं विषयादुपरमो विषयोपरमः विषया भोग्याः पंच शब्दादयस्तेभ्य
उपरमाश्च पि पंच तथा हि अर्जनरक्षणक्षयभोगहिंसादोषदर्शनहेतुजन्मान उपरमाः पंच भवंति तथा हि से
वादयोऽर्थार्जनोपायास्ते च सेवकादीनां दुःखाकुर्वन्ति दुष्प्रभुरीश्वराः स्वयं दंडि चंडश्च नेजां वेदनां भावयन्त्यातः कः
सेवासुखप्रसक्त इत्येवमस्याप्यर्जनोपायाद्दुःखतोऽपि इति विषयोपरमे या तुष्टिः सा पारमुच्यते तथार्जितमपि धनं राजकार्य
रिकाग्निजलौघादिभ्यो विनंक्ष्यतीति तद्रक्षणे महद्दुःखमिति भावयतो विषयोपरमे या तुष्टिः सा द्वितीया सुपारमुच्यते एवं

सां.कौ.


चतुर्ष्वपि वर्णेष्वविशेषात ३

दैवस्तैर्यग्योनश्च पंचधा भवति मानुष्यश्चैकविधः समासतो भौतिकः सर्गः॥५२॥ अष्टविकल्पो दैवः सर्गो ब्राह्मप्राजापत्यैन्द्र
पैत्रगांधर्वयक्षराक्षसपैशाचाः इति तैर्यग्योनश्च पंचविधो भवति पशुमृगपक्षिसरीसृपस्थावराः मानुष्यश्चैकविधः ब्राह्म
णत्वाद्यवान्तरजातिभेदाविवक्षया संस्थानस्य चतुष्पाविशेषादिति समासतः संक्षेपतो भौतिकः सर्गः घटादयस्तु शरीरि
त्वेपि स्थावरा एवेति ५२ भौतिकस्य सर्गस्य चैतन्योत्कर्षनिकर्षतारतम्याभ्यां ऊर्ध्वाधोमध्यभावेन त्रैविध्यमाह ऊर्ध्वं सत्त्व
विशालस्तमोविशालश्च मूलतः सर्गः मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ५३॥ ऊर्ध्वं सत्त्वविशालो द्युप्रसरतिः सत्यान्तो
लोकः सत्त्वबहुलः तमोविशालश्च मूलतः सर्गः पश्वादिस्थावरान्तः सोपि मोहमयत्वात् मोहबहुलः भूर्लोकस्तु सप्तद्वीपसमुद्रसन्नि
वेशो विशेषो मध्यो रजोविशालः धर्माधर्मानुष्ठानपरत्वाद्दुःखबहुलत्वाच्च॥ नाभिमौलोकसंस्थितिं दर्शयति॥ ब्रह्मादिस्तम्ब
पर्यन्तः स्तम्बस्तृणोलवस्तादयः संगृहीतः॥५३॥ तदेवं सर्गं दर्शयित्वा तस्यापवर्गसाधनवैराग्योपयोगिनीं दुःखहेतुतामाह
जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः लिंगस्याविनिवृत्तेस्तस्माद्दुःखं स्वभावेन॥५४॥ यद्यपि विविधविचित्रानन्दभो
गिनः प्राणभृतः सन्त्येव तथापि सर्वेषां जरामरणकृतं दुःखमविशिष्टम् सर्वस्य खलु कृमेरपि मरणत्रासो मा न भूवं भूयासमिति
बुद्ध्यात्मकोस्ति दुःखं च भयहेतुरिति मरणं दुःखम् स्यादेतत् सुखदुःखादयः प्राकृताः बुद्धिगुणास्तत्कथमेते चेतनसंबंधिनो भव
न्तीत्यत उक्तं पुरुषः इति पुरि लिंगे शेते इति पुरुषः लिंगं च तत्संबंधीति चेतनोपि तत्संबंधी भवतीत्यर्थः कुतः पुनः लिंगसंबंधि दुःखं
चेतनस्यापि पुरुषस्येत्यत आह लिंगस्याविनिवृत्तेः पुरुषाद्भेदाग्रहात् लिंगधर्मानात्मन्यध्यवस्यति पुरुषः अथवा दुःखप्रा
प्तेरवधिराह आकथ्यते लिंगं यावन्न निवर्तते तावदित्यादिति ५५॥ उक्तस्य सर्गस्य कारणं विप्रतिपत्तिं निराकरोति इत्येष प्रकृतिकृतो
महदादिविशेषभूतपर्यन्तः प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरंभः ५६॥ आरभ्यते इत्यारंभः सर्गः प्रकृत्यैव

पविपर्य्ययानांपरिहारेण विवेकसाक्षात्कारस्य स्वच्छप्रवाहेवस्थानं सा च न विनादरनैरंतर्य्यदीर्घकालसेवितात्भ्या
सपरिपाकाद्भवतीति दानेन विवेकख्यातिमुक्तार्थ्येण सोपि संगृहीतः सेयंपंचमीसिद्धिः सदामुदितमुच्यते तिस्रश्च मुख्या
सिद्धयः प्रमोदमुदितमोदमाना इत्यष्टौ सिद्धयः अन्यतुमाचक्षते विनोपदेशादिनाप्राग्भवीयाभ्यासवशात्तत्वस्य स्वयं
मूहनं सा सिद्धिरूहः यस्य सांख्यपाठमन्यदीयमाकर्ण्य तत्वज्ञानमुत्पद्यते सा सिद्धिः शब्दः पाठानन्तरं भावित्वा
त् यस्याध्ययना वा प्रेम्स्य संवेधेन सांख्यशास्त्रं ग्रंथतोर्थतश्चाधीत्य ज्ञानमुत्पद्यते साध्ययनहेतुका सिद्धिरध्ययनं तु हेतु
प्राप्तिरिति यस्याभ्यागत तत्वसुहृद्प्राप्यज्ञानमुत्पद्यते सा ज्ञानलक्षणा सिद्धिः सुहृत्प्राप्तिः दानं च सिद्धिहेतुः धनादिदानेनारा
धितो ज्ञानी ज्ञानं प्रयच्छतीति अस्य युक्तायुक्तत्वे सूरिभिरेवावगन्तव्ये इति कृतं परदोषोद्भावनेन नः सिद्धान्तमात्रव्याख्यानतु
त्पराणामितिसिद्धितुष्टिविपर्य्ययेणाशक्तिर्बुद्धिवधः सप्तदशधा [illegible] अत्र प्रत्ययसर्गं सिद्धिरूपादेयेति प्रसिद्धमेव तन्नि
राकरणहेतवस्तु विपर्य्ययाशक्तितुष्टयो हेयाइति सिद्धेः पूर्वोङ्कुशस्त्रिविधः इति पूर्व इति विपर्य्ययाशक्तितुष्टीः परामृशति ताः
सिद्धिकरिणीनामङ्कुशोनिवारकत्वात् अतः सिद्धेः परिपंथित्वादंकुश एवेति विपर्य्ययाशक्तितुष्टयो हेयाइत्यर्थः ५०॥ स्यादे
तत्पुरुषार्थप्रयुक्ता सृष्टिः स च पुरुषार्थः प्रत्ययसर्गाद्वा तन्मात्रसर्गाद्वा सिध्यतीति कृतमुभयसर्गेणेत्यत आह नविनाभावैर्लिं
गं नविनालिंगेन भावनिर्वृत्तिः ॥ लिंगाख्यो भावाख्यस्तस्माद्द्विविधः प्रवर्त्तते सर्गः ५१॥ लिंगमितितन्मात्रसर्गमुपलक्ष
यति भावैरिति च प्रत्ययसर्गम् एतदुक्तं भवति तन्मात्रसर्गस्य पुरुषार्थसाधनत्वं स्वरूपं च नहि प्रत्ययसर्गं विना एवं च प्र
त्ययसर्गस्य स्वरूपं च पुरुषार्थसाधनत्वं तस्मिन्तन्मात्रसर्गादृते सुपपन्नस्तन्मात्रसर्गः एवं स एव भोगसाधनानीन्द्रिया
ण्यन्तःकरणानि चांतरेण न संभवन्ति नचतानि धर्म्मादिभावान्विना नचापवर्गहेतुर्विवेकख्यातिरुभयसर्गं विने
त्युपपन्नमुभयविधसर्गः अनादित्वाच्च बीजांकुरवदन्योन्याश्रयदोषो नावहति कल्पादावपि प्राग्भावीयकल्पोत्पन्नभावलिंग
संस्कारवशाल्लिंगभावयोरुत्पत्तिर्न [illegible] प्रत्ययसर्गं तन्मात्रसर्गं विभजते अष्टविकल्पो
भयसर्गप्रवृत्तिः भोगः पुरुषार्थान भोग्यान् शब्दादीन् विहाय भोग्यायतनं च शरीरद्वयं विहाय संभवतीत्यु    सूरिः ४

सांख्यौ.
२३

प्रकृतेरुचेतनायाः प्रवृत्तेर्न स्वार्थग्रहेन कारुण्यं प्रयोजकमिति नोक्तदोषप्रसंगावतारः पारार्थ्यमात्रं तु प्रयोजकमुपपद्यते तस्मा
त्सुष्ठूक्तं वत्सविवृद्धिनिमित्तमिति ५६॥ स्वार्थं इवेति दृष्टान्तं विभजते औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्त्तते लोकः॥
पुरुषस्य विमोक्षार्थं प्रवर्त्तते तद्वदव्यक्तम् ५७ औत्सुक्यमिच्छा सा खल्विष्यमाणप्राप्तौ निवर्त्तते इष्यमाणं च स्वार्थः
इष्टलक्षणत्वात्फलस्य दार्ष्टान्तिके योजयति पुरुषस्य विमोक्षार्थं प्रवर्त्तते तद्वदव्यक्तम् ५७॥ ननु भवतु पुरुषार्थः प्रव
र्त्तको निवृत्तिस्तु कुतः स्यात्प्रकृतेरित्यत आह रंगस्य दर्शयित्वा यथा निवर्त्तते नर्त्तकी नृत्यात् पुरुषस्य तथात्मानं प्रका
श्य विनिवर्त्तते प्रकृतिः॥५८॥ रंगस्येति स्थानेन स्थानिनः पारिषदानुपलक्षयति आत्मनं शब्दाद्यात्मना पुरुषादेर्नत्वप्र
काश्येत्यर्थः॥५८॥ स्यादेतत्प्रवर्त्ततां प्रकृतिः पुरुषार्थं पुरुषात्तु उपकारात्सा लप्स्यते केचिदुपकारमात्मासंपादनाराधिता
हि चात्तापयतु भर्त्तं भुंजिष्यात्तथा न परार्थास्यादत आह॥ नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः
गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति॥५९॥ यथा गुणवानुपकार्य्यपि भृत्यः निर्गुणेत एवानुपकारिणि स्वामिनि निष्फलारा
धनः एवमियं प्रकृतिर्गुणवत्युपकारिण्यनुपकारिणि निर्गुणे पुरुषे व्यर्थश्रमेति पुरुषार्थमेव यतते न स्वार्थमिति सि
द्धम् ५९। स्यादेतन्नर्त्तकी नृत्यं पारिषदेभ्यो दर्शयित्वा निवृत्तापि पुनस्तत्कुतूहलात्प्रवर्त्तते यथा तथा प्रकृतिः पुरुषाया
त्मानं दर्शयित्वा निवृत्तापि पुनः प्रवर्त्स्यतीत्यत आह॥ प्रकृतेः सुकुमारतरं न किंचिदस्तीति मे मतिर्भवति या दृष्टास्मी
ति पुनर्न दर्शनमुपैति पुरुषस्य॥६०॥ सुकुमारतरतातिपेलवता परपुरुषादर्शसहिष्णुतेति यावत् असूर्यंपश्या कुलवधूरति
मंदाक्षमंथरा प्रमादाद्विगलितशिरस्त्रा चंचलांचलेन चेदवलोक्यते परपुरुषेण तदासौ तथा प्रयतते प्रमत्ता यथैनां पुरुषां
तराणि न पुनः पश्यंति एवं प्रकृतिः कुलवधूतोप्यधिकतरा दृष्टा विवेकेन पुनर्न दृश्यत इत्यर्थः॥६०॥ स्यादेतत् पुरुषश्चेदगुणोऽप
रिणामी कथमस्य मोक्षः [illegible] नसमाख्याः [illegible] उरूपेऽपरिणामि



23

तो नेश्वरेण न ब्रह्मोपादानेनाप्यकारणो लोकः अकारणत्वे ह्यस्य तत्सभावो वा स्यान्नापि ब्रह्मोपादानः चितिशक्तेः परिणा-
मात् नेश्वराधिष्ठितप्रकृतिकृतः निर्व्यापारस्याधिष्ठातृत्वासंभवात् । नहि निर्व्यापारस्तक्षा वास्यादि अधितिष्ठति॥
ननु प्रकृतिश्चेत्तस्याः नित्यायाः प्रवृत्तिशीलाया अनुपरमात् सर्वदैव सर्गः स्यादिति न कश्चिन्मुच्येतेत्यत आह॥
प्रतिपुरुषविमोक्षार्थं स्वार्थ इव [illegible]र्थे यथा तथा परार्थे आरंभ इत्यर्थः ५५ स्यादेतत् स्वार्थं परार्थं वाभिमत्य चेतनः प्रव-
र्त्तते न च प्रकृतिरचेतनैवं प्रवर्त्तितुमर्हति तस्मादपि प्रकृतेरधिष्ठाता चेतनः न च क्षेत्रज्ञा अचेतना अपि प्रकृतिमधि-
ष्ठातुमर्हन्ति तेषां प्रकृतिस्वरूपानभिज्ञत्वात्॥ तस्मादस्ति सर्वार्थदर्शी प्रकृतेरधिष्ठाता स चेश्वर इत्यत आह वत्स-
विवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य॥५६ दृष्टमचेतन-
मपि प्रयोजनेन प्रवर्त्तमानं यथा वत्सविवृध्यर्थं क्षीरमचेतनमपि प्रवर्त्तते एवं प्रकृतिरचेतनापि पुरुषविमोक्षाय
प्रवर्त्स्यति न च क्षीरप्रवृत्तेरपीश्वराधिष्ठाननिबंधनत्वेन साध्यत्वात् साध्येन व्यभिचार इति सांप्रतं प्रेक्षावत्प्रवृत्तेः
स्वार्थकारुण्याभ्यां व्याप्तत्वात् ते च जगत्सर्गाद्व्यावर्त्तमाने प्रेक्षावत्प्रवृत्तिपूर्वकत्वमपि निवर्त्तयतः न ह्यवाप्तस-
कलेप्सितस्य भगवतः सृज्यमाने जगति किमपीप्सितं भवतीति नापि कारुण्यादस्य सर्गे प्रवृत्तिः प्राक्सर्गा-
ज्जीवानामिन्द्रियशरीरविषयानुत्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छया तत्कारुण्यं सर्गोत्तरकालं दुःखिनोऽव-
लोक्य कारुण्याभ्युपगमे दुरुत्तरमितरेतराश्रयत्वं कारुण्येन सृष्टिः सृष्ट्या च कारुण्यमिति अपि च करुणया प्रे-
रित ईश्वरः सुखिन एव जंतून् सृजेन्न विचित्रान् कर्मवैचित्र्याद्वैचित्र्यमिति चेत् कृतमनेन प्रेक्षावता क-
र्माधिष्ठानेन तदनधिष्ठानमात्रादेव शरीरेन्द्रियविषयानुत्पत्तौ दुःखानुपपत्तेरपि सुलभत्वात्:

नतथापि तत्त्वज्ञानवासनया तत्त्वसाक्षात्कारमादधत्या इमिथ्याज्ञानवासना उच्छेत्तुम्। तत्त्वपक्षपातो हि धियां स्वभावः यथाहुर्बा
ह्या अपि निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः नवाधो यत्नवत्त्वेपि बुद्धेस्तत्पक्षपाततः इति ज्ञानस्वरूपमुक्तम्. नास्मि न मे
नाहमिति अस्मीति आत्मनि क्रियामात्रं निषेधयति यथाहुः कृभ्वस्तयः क्रियासामान्यवचना इति तथा चाध्यवसाया
भिमानसंकल्पालोचनानि बाह्याश्च सर्वे व्यापाराः आत्मनि प्रतिषिद्धानि बोद्धव्यानि यत आत्मनि व्यापारो नेको
नास्त्यतो नाहमहमिति कर्तृपदमहं जानामि अहं जुहोमि अहं यजे अहं ददे अहं भुंजे इति सर्वत्र कर्तुः परामर्शान्निष्क्रियत्वेन
कर्तृत्वाभावो तः सुष्ठूक्तं नाहमिति अत एव न मे कर्त्ता हि स्वामितां लभते तदभावात् कुतः स्वाभाविकी स्वामितेत्यर्थः अथ
नास्मीति नापुरुषोस्मि न प्रसवधर्मीः प्रसवधर्मत्वाच्च अकर्तृत्वमाह नाहमिति अकर्तृत्वाच्च न स्वामितेत्याह न मेइति
नन्वेतावत्सु ज्ञानेष्वपि कश्चित्करांचिदज्ञातो विषयोस्ति तदज्ञानं च जन्तून्बंधयिष्यतीत्यत उक्तमपरिशेषमिति नास्ति
किंचिदपरिशिष्टं ज्ञातव्यं यदज्ञानं बंधयिष्यति ॥६४॥ किं पुनरनेन दृशेन तत्त्वसाक्षात्कारेण सिध्यतीत्यत आह. तेन
निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्तां प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वच्छः ॥६५॥ भोगविवेकसाक्षा
त्कारौ हि प्रकृतेः प्रसोतव्यौ तौ च प्रसूतौ नास्याः प्रसोतव्यमवशिष्यते यत्प्रसोष्यत इति निवृत्तप्रसवा प्रकृति विवेकज्ञानरूपाया
धीस्तस्य वशः सामर्थ्यं तस्मात्. अतत्त्वज्ञानपूर्वकाणि खलु धर्मवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्याणि वैरा
ग्यमपि केवले तोष्टिका नाम तत्त्वज्ञानपूर्वकमेव तत्र तत्त्वज्ञानं विरोधित्वेनातत्त्वज्ञानमुच्छिनत्ति कारणरूप
निवृत्त्या च षट्रूपाणि निवर्तन्ते इति सप्तरूपाविनिवृत्ता प्रकृतिः प्रेक्षकवदवस्थितः इति निष्क्रियः स्वच्छः रजस्तमो
[illegible]ति कलुषया बुद्ध्या [illegible] सम्भिन्नः सात्विक्यानुबुद्ध्या तदा [illegible] स्य मनाक् सम्भेदोस्त्येव अन्यथैवं भूते

न्यसंभवात् अतएव नास्य पुरुषस्य संसारश्चाप्यभावापरनामास्ति निष्क्रियत्वात् तस्मात्पुरुषविमोक्षार्थमिति दिक्मं वचइती मांधं का
मुपसंहारव्याजेनाभ्युपगच्छत्रव्रयाकरोति तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित् संसरति बध्यते न कश्चित्पुरुषः सं
सरति न कश्चित्पुरुषो मुच्यते इति प्रकृतिरेव तु नानापुरुषाश्रया सती बध्यते संसरति मुच्यते चेति बंधमोक्षसंसाराः पुरुषे उपचर्य्यन्ते
यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्य्येते तदाश्रयेण भृत्यानां तत्स्वामित्वात् तत्फलस्य कोशलाभादेः स्वा
मिनि संबंधात् भोगापवर्गयोः प्रकृतिगतयोरपि विवेकाग्रहात्पुरुषसंबंध उपपादितः इति सर्वं पुष्कलम् ॥ ६२ ॥ नन्वेवगतं
प्रकृतिगतावंधसंसारापवर्गाः पुरुषे उपचर्य्यन्ते इति किंसाधनाः पुनरेते प्रकृतेरित्यत आह ॥ रूपैः सप्तभिरेव बध्ना
त्यात्मानमात्मना प्रकृतिः सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३ ॥ ज्ञानवर्ज्जं धर्मादिभिः सप्तरूपैरिति पुरुषा
र्थं प्रति भोगापवर्गं प्रति मोचयत्यात्मानमात्मनैकरूपेण तत्त्वज्ञानेन विवेकख्यात्या विमोचयति पुनर्भोगापवर्गौ न
करोतीत्यर्थः ॥ ६३ ॥ अवगतमीदृशं तत्त्वं ततः किमित्यत आह ॥ एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ॥ अविपर्य्य
याद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥ तत्त्वेन विषयेण विषयिणो ज्ञानमुपलक्षयति उक्तरूपप्रकारतत्त्वविषयज्ञानाभ्या
सात् तद्विषयमेव साक्षात्कारमुपजनयति तत्त्वविषयश्चाभ्यास इति तत्त्वसाक्षात्कारं जनयत्यत उक्तम् विशुद्धमिति ॥
कुतो विशुद्धमित्यत उक्तम् अविपर्य्ययादिति संशयविपर्य्ययौ ज्ञानस्याशुद्धी तद्रहितं विशुद्धं तदिदमुक्तम् अविपर्य्ययादिति
[illegible] संशयो विपर्य्ययश्च तेनाविपर्य्ययादिति संशयविपर्य्ययाभावो दर्शितः तत्त्वविषयत्वा
च्च संशयविपर्य्ययाभावः स्यादेतदुत्पद्यतामिदमीदृशं ज्ञानं तथाप्यनादिर्मिथ्याज्ञानसंस्कारो मिथ्याज्ञानं जनयि
तत्वात्तथा च तन्निबंधनस्य संसारस्य [illegible] मिन्नम् यद्यप्यनादिर्विपर्य्ययवास

देवानादिरप्यनियतपरिपाककालोऽपि कर्माशयप्रचयो दग्धबीजभावतया न जात्यायुर्भोगलक्षणाय फला
य कल्पते क्लेशसलिलावसिक्तायां बुद्धिभूमौ कर्मबीजान्यंकुरं प्रसुवते तत्त्वज्ञाननिदाघनिपीतसकलक्लेशसलिला
यां तु ऊषरायां कुतः कर्मबीजानामंकुरप्रसवः इत्युक्तं धर्मादीनामकारणप्राप्तौ अकारणत्वं प्राप्तावित्यर्थः ।
उत्पन्नतत्त्वज्ञानोऽपि संस्कारवशात्तिष्ठति यथोपरतेऽपि कुलालव्यापारे चक्रं वेगाख्यसंस्कारवशाद्भ्रमत्तिष्ठति कालपरि
पाकवशात्तूपरते संस्कारे निष्क्रियं भवति शरीरस्थितौ प्रारब्धविपाकौ धर्माधर्मौ संस्कारः । तथा च श्रुतिः भोगेन त्वित
रे क्षपयित्वाथ सम्पत्स्यते इति तावदेवास्य चिरं यावन्न विमोक्ष्ये अथ संपत्स्य इति च क्षीयमाणाविद्यासंस्कारशेषश्च
संस्कारवशात्तत्सामर्थ्याद्धृतशरीरस्तिष्ठति ॥ ६६ ॥ स्यादेतत् यदि संस्कारशेषादपि धृतशरीरस्तथापि कदास्य मोक्षो भ
विष्यतीत्यत आह प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६७ ॥ प्रारब्ध
विपाकानां तावत्कर्माशयानां तत्त्वज्ञानाग्निना बीजभावो दग्धः प्रारब्धविपाकानां तु भोगेन क्षये सति प्राप्ते शरी
रभेदे विनाशे चरितार्थत्वात्कृतप्रयोजनत्वात्प्रधानस्य तं पुरुषं प्रति निवृत्तौ ऐकान्तिकमवश्यंभावि आत्यन्तिकमविना
शि उभयं कैवल्यं दुःखत्रयविगमं प्राप्नोति पुरुषः ॥ ६७ ॥ प्रमाणोपपादितेऽप्यर्थे आम्नायादनाय परमर्षिपूर्वकत्वमाह ।
परमार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ॥ स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६८ ॥ गुह्यं गुहानिवासि
स्थूलधियां दुरधिगममिति यावत् परमर्षिणा कपिलेन तामेव श्रद्धामागमिकत्वेन द्रढयति स्थित्युत्पत्तीत्यादि यत्र ज्ञा
नेमदर्थे यथा चर्मणि द्वीपिनं हन्ति भूतानां प्राणिनां स्थित्युत्पत्तिप्रलया आगमेऽपि [illegible] न्ते ॥ ६८ ॥ परमर्षिणायत

प्रकृतिर्देशनानुपपत्तेरिति ६४ स्यादेतन्निवृत्तप्रसवामिति न युज्यामहे संयोगकृतो हि सर्गः स चोक्तम् योग्यताच संयोगः भोक्तृ
त्वयोग्यता च पुरुषस्य चैतन्यं भोग्यत्वयोग्यता च प्रकृतेर्जडत्वं विषयत्वं च न चैतयोरस्ति निवृत्तिः न च करणीयाभावान्नि
वृत्तिस्तज्जातीयस्यान्यस्य करणीयत्वात् पुनः शब्दाद्युपभोगवदित्यत आह दृष्टा मयेत्युपेक्षक एको दृष्टाहमित्युप
रमत्यन्या ।। सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ६५ ।। करोतु नाम पौनःपुन्येन शब्दाद्युपभोगं प्रकृतिर्यथावि
वेकख्यातिर्न कृतेति कृतविवेकख्यातिस्तु न शब्दाद्युपभोगं जनयति अविवेकख्यातिनिबंधनो हि तदुपभोगो नि
बंधनाभावेन भवितुमर्हति अंकुर इव बीजाभावे प्राकृतान्हि सुखदुःखमोहात्मनः शब्दादींस्तदविवेकान्ममेत इत्यमन्य
मान आत्मोपभुंजीत एवं विवेकख्यातिमपि प्राकृतीमविवेकादेवात्मा मदर्थयामिति मन्यते उत्पन्नविवेकख्यातिस्तु तदसंस
गान्न शब्दादीन्भोक्तुमर्हति नापि विवेकख्यातिं प्राकृतीमपि ततो विविक्त आत्मा स्वार्थामभिमंतुमर्हति पुरुषार्थो ह्युपभोग
विवेकौ प्रकृतेरारंभप्रयोजकाविति अपुरुषार्थौ संतौ न प्रकृतिं प्रयोजयतः तदिदमुक्तम् प्रयोजनं नास्ति सर्गस्येति प्रयो
ज्यते हि सर्गे प्रवर्तनेनेति प्रयोजनमपुरुषार्थत्वेन नास्तीत्यर्थः ६५ ।। स्यादेतदुत्पन्नतत्वसाक्षात्कारो मुक्तश्चेत्तदनंतरमेवास्य
कस्माद्देहपातः स्यात् स्थितिकल्पमयमदेहः प्रकृतिं पश्येत् अथ तत्वज्ञानेऽपि न मुच्यते कर्मणामप्रक्षीणत्वात्तर्हि कुतः सयोगा
दिति चेत् अतो तत्वज्ञानेन मोक्षसाधनमिति यत्कालकेऽजन्मना तत्वज्ञानेनापवर्ग इति रिक्ते वचः भोगेन चापरि
संख्येयः कर्माशयप्रचययोः नियतविपाककालः क्षेतव्यस्ततश्चापवर्गप्राप्तिरित्यपि मनोरथमात्रमित्यत आह सम्य
ग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ तिष्ठति संस्कारवशाच्चक्रभ्रमिवद्धृतशरीरः ६६ तत्वसाक्षात्कारोदया

२८